इ नियताधिपूर्व्वकः अध्ययने सक० अदादि० आत्म० अनिट् ।

कर्त्तरि । अधीते अधीयाते अधीयते । अधीयीत । अधीताम् । अध्यैत । अध्यगीष्ट-अध्यैष्ट अधिजगे । अध्येता अध्येषीष्ट । अध्येष्यते । अध्यगीष्यत अध्यैष्यत ।

कर्म्मणि । अधीयते । अध्यगायि अध्यायि । अध्यगायिषाताम् अध्यगीषाताम् । अध्यायिषाताम् अध्यैषाताम् । अधिजगे । अध्यायिता अध्येता । अध्येषीष्ट अध्यायिषीष्ट । अध्यायिष्यते अध्येष्यते । अध्यगायिष्यत अध्यगीष्यत अध्यायिष्यत अध्यैष्यत । णिचि आत्मनेपदं नास्ति । अध्यापयति । अध्यापिपत् अधिजिगपत् । अध्यापयाम्-बभूव-आस-चकार । अध्यापयिता । अध्याप्यात् । अध्यापयिष्यति । अध्यापयिष्यत् । कर्म्मणि अध्याप्यते । अध्यापि अध्यापयि । अध्यापयाम्-बभूवे-आसे-चक्रे । अध्यापयिता अध्यापिता । इत्यादि ।

सनि अधिजिगांसते अध्यजिगांसिष्ट । कर्म्मणि अधिजिगांस्यते अध्यजिगांसि । णिच् सनन्तस्य अध्यापिपयिषति अधिजिगापयिषति ।

क्रतृषु । अध्ययनीयम् । अध्यायः । अध्ययनम् । अध्येता । अधीतः । अधीतिः अध्येतुम् । अध्येतव्यम् अध्येयः

अधीत्य । अधीयमानः अध्येष्यमाणः । ण्यन्तस्य अध्यापनीयम् । अध्यापकः । अध्यापयिता । अध्यापितः अध्यापयितुम् । अध्यापयितव्यः। स्त्रियामस्ति युच् अध्यापना । आध्याप्यम् अध्याप्य । अध्यापयन् अध्याप्यमानः । अध्यापयिष्यन् अध्यापयिष्यमाणः अध्यापिपयिषु (णौ) । सन्नन्तस्य अधिजिगांसनीयम् । अधिजिगांसिता । अधिजिगांसितः । अधिजिगांसितुम् । अधिजिगांसितव्यः । स्त्रियामस्ति अ अधिजिगांसा । अधिजिगांसुः । अधिजिगांसन् अधिजिगांस्यमानः अधिजिगांसिष्यमाणः ।

6

इष वाञ्छायाम् सक० तुदा० पर० सेट् ।

कर्त्तरि । इच्छति । इच्छेत् । इच्छतु । ऐच्छत् । ऐषीत् । इयेष ईषतुः ईषुः इयेषिथ । एषिता एष्टा । इष्यात् । एषिष्यति । ऐषिष्यत् । कर्म्मणि इष्यते । ऐषि । ईषे । एषिता एष्टा । एषिषीष्ट । एषिष्यते । ऐषिष्यत । णिचि एषयति-ते । ऐषिषत्-त । एषयाम् बभूव-आस-चकार-चक्रे । एषयिता । कर्म्मणि । एष्यते । ऐषि ऐषयि । एषयाम् बभूवे-आसे-चक्रे । एषिता एषयिता । सनि । इषिषिषति । ऐषिषिषीत् । कर्म्मणि इषिषिष्यते । ऐषिषिषि ।

कृत्सु। एषणीयम्। एषः। एषी। एष्टव्यः एषितव्यः। एषिता एष्टा। इष्टः। इष्टिः। इच्छुः। इच्छा। एषित्वा इष्ट्वा। एष्यम्। इच्छन्। इष्यमाणः एषिष्यन्। एषिष्यमाणः। ण्यन्तस्य एषयितुम्। एषयितव्यः। एषितः क्तिन्नास्ति युच् एषणा। एषयित्वा। एषयन् एषयमाणः एष्यमाणः। एषयिष्यन् एषयिष्यमाणः एषिष्यमाणः। अधि-सत्कारे अधीच्छति सत्करोति। अधीष्टः सत्कृतः। अध्येषणम् सत्कारः। प्रति-ग्रहणे प्रतीच्छति गृह्णाति।

इष गतौ दिवा० सक० पर० सेट्।

कर्त्तरि। इष्यति। इष्येत्। इष्यतु। ऐष्यत्। ऐषीः। इयेष। एषिता एष्टा। इष्यात्।
कर्म्मणि। इष्यते। इष्येत। इष्यताम्। ऐष्यत। ऐषि। ईषे। एषिता एष्टा। एषिषीष्ट। एषिष्यते। ऐषिष्यत।
णिचि। तुदादिगणीयेषधातुवत्। एवं कृत्सु। प्र-प्रेरणे प्रेषयति प्रेरयति प्रेषणा प्रेरणा।

ईक्ष दर्शने आ० सक० आत्म० सेट् ।

कर्त्तरि । ईक्षते । ईक्षेत । ईक्षताम् । ऐक्षत । ऐक्षिष्ट । ईक्षाम्-बभूव-आस-चक्रे । ईक्षिता । ईक्षिषीष्ट । ईक्षिष्यते । ऐक्षिष्यत ।

कर्म्मणि । ईक्ष्यते । ईक्ष्येत । ईक्ष्यताम् । ऐक्ष्यत । ऐक्षि । ईक्षाम्-बभूवे-आसे-चक्रे । लुडादौ कर्त्तरीव रूपाणि ।

णिचि । ईक्षयति-ते । ऐचिक्ष त्-त । ईक्षयाम्-बभूव-आस-चकार-चक्रे । ईक्षयिता । ईक्ष्यात् ईक्षयिषीष्ट इत्यादि । कर्म्मणि । ईक्ष्यते । ऐक्षि ऐक्षयि । ईक्षयाम्-बभूवे-आसे-चक्रे । ईक्षिता ईक्षयिता । ईक्षिषीष्ट ईक्षयिषीष्ट इत्यादि ।

कृत्सु । ईक्षणीयः । ईक्षणम् । ईक्षकः । ईक्षिता । ईक्षितः । क्तिन्नास्ति च ईक्षा परीक्षा उपेक्षा । ईक्षितव्यम् । ईक्षितुम् । ईक्षित्वा । अपेक्ष्य । ईक्ष्यः । ईक्षमाणः ईक्ष्यमाणः । ईक्षिष्यमाणः । ण्यन्तस्य तु । ईक्षयिता । क्तिन्नास्ति युच् ईक्षणा । ईक्षयितव्यः । ईक्षयितुम् । ईक्षयित्वा । ईक्षयन् ईक्षयमाणः । ईक्षयिष्यन् ईक्षयिष्यमाणः इति भेदः । प्र-बुद्धिपूर्व्वककरणे सक० प्रेक्षते बुद्धिपूर्व्वं करोति । प्रति-प्रतीक्षायाम् (आकाङ्क्षाविशेषे) सक० प्रतीक्षते औत्सुक्येन

[redacted]। अप-आकाङ्क्षायाम् अवधीकरणे च अपेक्षते आकाङ्क्षति अवधिं करोति वा। परि-परीक्षायाम् सक॰ परीक्षा शुद्धिसूचकव्यापारः तत्त्वनिर्णायकव्यवहारश्च। परीक्षते शुद्ध्यादिं सूचयति तत्त्वेन निश्चिनोति वा। उत्प्र-उत्प्रेक्षायाम् सक॰ अन्यथा स्थित-वस्तुनोऽन्यरूपेण सम्भावनमुत्प्रेक्षा। उत्प्रेक्षते अन्यथा स्थितमन्यरूपेणोद्भावयतीत्यर्थः। उप-उपेक्षायाम् (औदासीन्यावलम्बने) अक॰ उपेक्षते उदास्ते इत्यर्थः। औदासीन्यहेतुक-त्यागेऽपि सक॰ उपेक्षते औदासीन्येन त्यजति। सम्-विवेचने सक॰ समीक्षते।

ईड् स्तुतौ अदा॰[2] सक॰ आत्म॰ सेट्।

कर्त्तरि। ईट्टे ईडिषे ईड्ढ्वे। ईडीत। ईट्टाम् ईडिष्व ईड्ढ्वम्। ऐट्ट। ऐडिष्ट। ईडाम्-बभूव-आस-चक्रे। ईडितासे। ईडिषीष्ट। ईडिष्यते। ऐडिष्यत। कर्म्मणि। ईड्यते। ऐडि। ईडाम्-बभूवे-आसे-चक्रे। लुङादौ कर्त्तरीव।

णिचि। ईडयति-ते। ऐडिडत्-त। ईडयाम्-बभूव-आस-चकार-चक्रे। ईडयितासि-से। ईड्यात्

ईड़यिषीष्ट । ईड़यिष्यति-ते इत्यादि । कर्म्मणि । ईड्यते । ऐड़ि । ईड़याम्-बभूवे-आसे-चक्रे । ईड़िता ईड़यिता । ईड़िषीष्ट ईड़यिषीष्ट इत्यादि ।

क्तत्सु । ईड़नीयम् । ईड़नम् । ईड़कः । ईड़ी । ईड़िता । ईड़ितः । क्तिन्नास्ति अ ईड़ा । ईड़ितव्यः । ईड़ितुम् । ईड़ित्वा । समीड्य । ईड्यः । ईड़ानः ईड्यमानः । ईड़िष्यमाणः । ण्यन्तस्य तु ईड़यिता । क्तिन्नास्ति युच् ईड़ना । ईड़यितव्यः । ईड़यितुम् । ईड़यित्वा । ईड़यन् ईड़यमानः । ईड़यिष्यन् ईड़यिष्यमाणः इत्यादि भेदः ।

ईश ऐश्वर्य्ये अदा॰ सक॰ आत्म॰ सेट् ।

कर्त्तरि । ईष्टे ईशिषे ईशिध्वे । ईशीत । ईष्टाम् ईशिष्व ईशिध्वम् । ऐष्ट । ऐशिष्ट । लिड़ादौ ईड़इव रूपाणि डकारस्थाने शकारमात्रभेदः ।

ईह चेष्टायाम् भ्वा॰ अक॰ आत्म॰ सेट् ।

कर्त्तरि । ईहते । ईहेत । ईहताम् । ऐहत । ऐहिष्ट । लिड़ादौ सर्व्वत्र ईड़धातोरिव रूपाणि डकारस्थाने हकारमात्रभेदः ।

ऊह वितर्के॰ भ्वा॰ सक॰ आत्म॰ सेट् ।

कर्त्तरि । ऊहते । ऊहेत । ऊहताम् । औहत । औहिष्ट । ऊहाम्-बभूव-आस-चक्रे । ऊहितासे । ऊहिषीष्ट । ऊहिष्यते । औहिष्यत ।

कर्म्मणि । ऊह्यते । औहि । ऊहाम्-बभूवे-आसे-चक्रे । लुडादौ कर्त्तरीव ।

उपसर्गपूर्ब्बकः उभयपदी समूहति समूहते । यादौ परे तु ह्रस्वः समुह्यात् समुह्य इत्यादि ।

णिचि । ऊहयति-ते । औजिहत्-त । ऊहयाम्-बभूव-आस-चकार-चक्रे । ऊहयितास्मि-से । ऊह्यात् ऊहयिषीष्ट । ऊहयिष्यति-ते । ऊहत्सु । ऊहनीयम् । ऊहनम् । ऊहः । ऊहकः ऊही । ऊहिता । ऊहितः । क्तिन्नास्ति अ ऊहा । ऊहितुम् । ऊहितव्यः । ऊहित्वा । समुह्य । ऊह्यः । ऊहमानः ऊह्यमानः । ऊहिष्यमाणः । ण्यन्तस्य तु ऊहयिता ऊहयितव्यः । ऊहयितुम् । ऊहयित्वा । ऊहयन् ऊहयमानः । ऊहयिष्यन् ऊहयिष्यमाणः इत्यादि भेदः ।

ऋ गतौ भ्वा॰ सक॰ पर॰ अनिट् ।

कर्त्तरि । ऋच्छति । ऋच्छेत् । ऋच्छतु । आर्च्छत् । आरत् आर्षीत् आरताम् आर्ष्टाम् आरन् आर्षुः । आर आरतुः आरुः आरिथ आरिव । अर्त्ता । अर्य्यात् । अरिष्यति ।

आरिष्यत् । कर्म्मणि अर्य्यते । आरि आरिषाताम् आर्षाताम् । आरे । आरिता अर्त्ता । आरिषीष्ट ऋषीष्ट । आरिष्यते अरिष्यते । णिचि अर्पयति-ते । आर्पिपत्-त । अर्पयाम्-बभूव-आस-चकार-चक्रे । अर्पयिता । अर्प्यात् अर्पयिषीष्ट । अर्पयिष्यति-ते आर्पयिष्यत्-त । सनि । अरिरिषति । आरिरिषीत् अरिरिषाम्-बभूव-आस-चकार । यङि अरार्य्यते । कृत्सु । अरणीयम् । अरणम् । आरः । अर्त्ता । ऋतः । ऋतिः । अर्त्तुम् । ऋत्वा । समृत्य । आर्य्यः । ऋच्छन् अर्य्यमाणः । अरिष्यन् । आरिष्यमाणः अरिष्यमाणः ।

सम्—सङ्गतौ अक० आत्मनेपदी । समृच्छते । समारत समार्त्त समारताम् समार्षाताम् । समारे । समर्त्तासे । समृषीष्ट ।

ऋ गतौ [3] जुहोत्यादि सक० पर० अनिट् ।

कर्त्तरि । इयर्त्ति इयृतः इयृति । इयर्षि इयृथः इयृथ इयर्म्मि इयृवः इयृमः । इयृयात् । इयर्तु इयृताम् इयृतु इयृहि इयृतम् इयृत इयराणि इयराव इयराम । ऐयः ऐयृताम् ऐयरुः ऐयः ऐयृतम् ऐयृत ऐयरम् ऐयृव ऐयृम । लुङादौ सर्व्वत्र भ्वादिगणीयवत् ।

एध वृद्धौ भ्वा० अक० आत्म० सेट्।

कर्त्तरि। एधते। एधेत। एधताम्। ऐधत। ऐधिष्ट। एधाम्-बभूव-आस-चक्रे। एधिता एधिषीष्ट। एधिष्यते। ऐधिष्यत। भावे। एध्यते। ऐधि। एधाम्-बभूवे-आसे-चक्रे। लुङादौ एकवचने कर्त्तरीव।

णिचि। एधयति-ते। ऐदिधत्-त। एधयाम्-बभूव-आस-चकार-चक्रे। एधयिता। एध्यात्। एधयिषीष्ट। एधयिष्यति-ते। कर्म्मणि। एध्यते। ऐधि। एधयाम्-बभूवे-आसे-चक्रे। एधिता एधयिता। एधिषीष्ट एधयिषीष्ट इत्यादि।

कृत्सु। एधनीयम्। एधनम्। एधकः। एधः। एधः एधसी। एधी। एधिता। एधितः। क्तिन्नास्ति अ एधा। एधितुम् एधितव्यम्। एधित्वा। समेध्य। एध्यः। एधमानः एधिष्यमाणः। ण्यन्तस्य तु एधयिता। एधना। एधयितुम्। एधयितव्यः। एधयित्वा। एधयन् एधयमानः एधयिष्यन् एधयिष्यमाणः इत्यादि भेदः।

कथ कथने अदन्तचुरा० सक० उभ० सेट्।

कर्त्तरि। कथयति-ते। कथयेत्-त। कथयतु-ताम्। अकथयत्-त। अचीकथत्-त अचकथत्-त। कथयाम्-बभूव-आस-चकार-चक्रे। कथयिता-सि-से। कथ्यात् कथयिषीष्ट। कथयिष्यति-ते।
कर्म्मणि। कथ्यते। अकथि। कथयाम्-बभूवे-आसे-चक्रे। कथिता कथयिता। कथिषीष्ट कथयिषीष्ट इत्यादि।
सनि। चिकथयिषति-ते। अचिकथयि-षीत् षिष्ट। चिकथयिषाम्-बभूव-आस-चकार चक्रे।
क्रत्सु। कथनीयम्। कथनम्। कथकः। कथयिता। कथितः। क्तिन् युच् च नास्ति अ कथा। कथयितुम्। कथयितव्यः। कथयित्वा। संकथ्य। कथ्यः। कथय-न् मानः। कथ्यमानः कथयि-ष्यन् ष्यमाणः।

कम इच्छायाम् भ्वा० सक० आत्मने० सेट्।

कर्त्तरि। कामयते। कामयेत। कामयताम्। अकामयत। अचीकमत अचकमत। कामयाम्-बभूव-आस-चक्रे, चकमे। कामयिता कमिता। कामयिषीष्ट कमिषीष्ट। कामयि-

ष्यते कमिष्यते। अकामयिष्यत अकमिष्यत। कर्म्मणि काम्यते। काम्येत। काम्यताम्।
अकाम्यत। अकामि अकमि। कामयाम्-बभूवे-आसे-चक्रे-चकमे। कामिता कामयिता
कमिता। कामिषीष्ट कामयिषीष्ट कमिषीष्ट। कामिष्यते कामयिष्यते कमिष्यते।
णिचि। कामयति-ते। अचीकमत् अचकमत्-त। कर्म्मणि काम्यते। आकामि अकमि।
सनि। चिकामयिषते चिकमिषते। अचिकामयिषिष्ट अचिकमिषिष्ट।
क्तत्‌सु। कमनीयः। कमनम्। कामः। कामकः। कामुकः। कामी। कामयिता कमिता। कामितः
कान्तः। णिङ् पक्षे युच् पक्षे क्तिन् कामना कान्तिः। कामयितुम् कमितुम्। कामयितव्यः
कमितव्यः। कामयित्वा कमित्वा कान्त्वा। संकाम्य। काम्यः। कम्रः। कामयमानः काम्यमानः।
कामयिष्यमाणः कमिष्यमाणः। ण्यन्तस्य कामयिता। कामितः। कामना। कामयितव्यः।
कामयितुम् कामयित्वा। कामय-नृ मानः कामयि-ष्यन् ष्यमाण इति भेदः।

कम्प चलने भ्वादि अक० आत्म० सेट्।

कम्पते। कम्पेत। कम्पताम्। अकम्पत। अकम्पिष्ट। चकम्पे। कम्पिताहे। कम्पिषीष्ट।
कम्पिष्यते। अकम्पिष्यत। भावे। कम्प्यते। अकम्पि।

खिषि । आत्मनेपदं नास्ति कम्पयति । अचिकम्पत् । कम्पयाम् बभूव आस चकार । कम्प्यिषि । कम्प्यते । अकम्पि । कम्पयाम् बभूवे आसे चक्रे । कम्पिताहे कम्पयिताहे । छतृच । कम्पनीयम् । कम्पनः । कम्पकः । कम्पः । कम्पिता । कम्पितः । कम्पितुम् । कम्पित्वा । प्रकम्प्य । कम्प्रः । कम्पमानः कम्पिष्यमाणः । णान्तस्य कम्पयिता । कम्पयितव्यः । कम्पयितुम् । कम्पयित्वा । कम्पयन् कम्प्यमानः । कम्पयिष्यन् कम्पयिष्यमाणः । अनु-अनुग्रहे सक० अनुकम्पते अनुगृह्णाति । अनुकम्पा ।

कर्ण भेदने अदन्तचुरादि० सक० उभयपदी सेट् ।

कर्णयति-ते । आङ्-श्रवणे आकर्णयति-ते । आकर्णनम् । आकर्णयन् । आकर्णितः ।

कल गतौ संख्यायाञ्च अदन्तचुरा० सक० उभ० सेट् ।

कर्त्तरि कलयति-ते । कलयेत्-त । कलयतु-ताम् । अकलयत्-त । अचीकलत्-त अचकलत्-त । सर्व्वं कथधातुवत् थकारस्थाने लकारमात्रभेदः । सम्-एकत्रस्थीकरणे संघातकरणे च संकलयति एकत्रस्थं करोति संहतं करोति वा । वि-योजने विकलयति वियोजयति ।

काङ्क्ष वाञ्छायां भ्वादि० पर० सक० सेट् ।प्रायेणाङ्पूर्व्वकः

कर्त्तरि आ-काङ्क्षति। काङ्क्षेत्। काङ्क्षतु। अकाङ्क्षत्। अकाङ्क्षीत्। चकाङ्क्ष। काङ्क्षिता। काङ्क्ष्यात्॥ काङ्क्षिष्यति। अकाङ्क्षिष्यत्। कर्म्मणि। काङ्क्ष्यते। अकाङ्क्षिष्ट। चकाङ्क्षे। णिचि काङ्क्षयति-ते। क्तत्सु। काङ्क्षणीयः। काङ्क्षणम्। आकाङ्क्षी। आकाङ्क्षकः। आकाङ्क्षिता। आकाङ्क्षितः। क्तिन्नास्ति अ आकाङ्क्षा। आकाङ्क्षितुम्। काङ्क्षित्वा। आकाङ्क्ष्य। काङ्क्ष्यम्। आङ्क्षन् काङ्क्ष्यमाणः। काङ्क्षिष्यन् काङ्क्षिष्यमाणः।

काल मन्त्रणे चालने च अदन्तचुरा० सक० उभ० सेट्।

कालयतिते चालयति मन्त्रयति वा। काल्यमानः चाल्यमानः।

काश प्रकाशे अकर्म्मकः भ्वादि० आत्म० सेट्।

काशते। काशेत। काशताम्। अकाशत। अकाशिष्ट। काशाम्-बभूव-आस-चक्रे चकाशे। काशिता। काशिष्यते। भावे काश्यते। अकाशि। काशाम् बभूवे आसे चक्रे चकाशे। लुडादौ कर्त्तरीव।

णिचि काशयति-ते । अचकाशत्-त । काशयाम्-बभूव-आस-चकार-चक्रे । काशयितासि-से । काश्यात् काशयिषीष्ट । काशयिष्यति-ते । अकाशयिष्यत्-त । कर्म्मणि काश्यते । अकाशि । काशयाम्-बभूवे-आसे-चक्रे । काशिता काशयिता ।

कृत्सु काशनीयम् । काशनम् । काशकः । प्रकाशः । काशी । काशिता । काशितः । काशितुम् । काशितव्यम् । काशित्वा । प्रकाश्य । प्रकाश्यः । प्रकाशमानः । काशिष्यमाणः । ण्यन्तस्य तु काशयिता । काशयितुम् । काशना । काशयितव्यः । काशयित्वा । काशय-न् मानः काशयि-ष्यन् ष्यमाणः इतिभेदः । निप्रतिभ्यामुपसर्गाभ्यां घञि निप्रत्योर्दीर्घः नीकाशः प्रतीकाशः ।

कित संशये रोगप्रतीकारे च स० आदि पर० सेट् ।

चिकित्सति । चिकित्सेत् । चिकित्सतु । अचिकित्सत् । अचिकित्सीत् । चिकित्साम् बभूव आस चकार । कर्म्मणि चिकित्स्यते । अचिकित्सि । चिकित्साम् बभूवे आसे चक्रे । संशये तु विपूर्व्वक एव । णिचि चिकित्सयति । कृत्सु । चिकित्सनीयम् । चिकित्सनम् । चिकित्सकः । चिकित्सी । चिकित्सिता । चिकित्सितः । स्त्रियाम् अ चिकित्सा । चिकित्सितुम् । चिकित्सित्वा विचिकित्स्य । चिकित्स्यम् । चिकित्सन् । चिकित्स्यमानः । चिकित्सिष्यन् । चिकित्सिष्यमाणः ।

कित निवासे अक० भ्वादि० पर० सेट्।

केतति। केतेत्। केततु। अकेतत्। अकेतीत्। चिकेत। केतिता। कित्यात्। केतिष्यति। भावे कित्यते। अकेति। चिकेते। सनि चिकेतिषति। णिचि केतयति ते। अचीकितत् त। कृत्सु केतनीयम् केतनम्। केतः। केती। केतितः। केतितुम्। केतन् केतिष्यन्।

सम्—संज्ञाकरणे सक० संकेतति संज्ञितं करोति। संकेतः संज्ञा। संकेतितः।

कुप कोपे दिवा० अक० पर० सेट्।

कर्त्तरि। कुप्यति। कुप्येत्। कुप्यतु। अकुप्यत्। अकुपत् अकोपीत्। चुकोप। कोपिता। कुप्यात्। कोपिष्यति। अकोपिष्यत्। भावे कुप्यते। अकोपि। णिचि कोपयति अचूकुपत्। सनि। चुकोपिषति। कृत्सु कोपनीयम्। कोपनम्। कोपनः। कोपः। कोपकः। कोपी। कोपिता। कुपितः। कोपितुम्। कुपित्वा। संकुप्य। कुप्यः। कुप्यन्। कोपिष्यन्।

कुष भेदने क्र्यादिगणीयः सक० पर० सेट्।

कुष्णाति। कुष्णीयात्। कुष्णातु। अकुष्णात्। अकोषीत्। निर् पूर्वकस्य निरकोषीत्

निरकुषत्। चुकोष। कोषिता। निष्कोषिता निष्कोष्टा। कोषिष्यति निष्कोषिष्यति निष्कोक्ष्यति। कर्म्मणि कुष्यते। अकोषि। निरकोषिषाताम् निरकुक्षाताम्। णिचि कोषयति-ते। अचूकुषत्-त। कोषयाम् बभूव आस चकार चक्रे। कर्म्मणि कोष्यते। अकोषि अकोषिषाताम् अकोषयिषाताम्।

कृत्सु कोषणीयम्। कोषणम्। कोषः। कोषकः। कोषी। कोषिता निष्कोषिता निष्कोष्टा। निष्कुषितः निष्कुष्टः। कोषितुम् निष्कोषितुम् निष्कोष्टुम्। कोषित्वा। निष्कुष्य। कुष्णन्। कोषिष्यन्। निष्कोषिष्यन् निष्कोक्ष्यन्। कोषिष्यमाणः निष्कोषिष्यमाणः निष्कोक्ष्यमाणः। ण्यन्तस्य तु कोषयिता कोषयितव्यः। कोषणा। कोषयितुम्। कोषयित्वा। कोषयन् कोषयमाणः। कोषयिष्यन् ष्यमाणः।

कूज अव्यक्तशब्दे भ्वा॰ अक॰ पर॰ सेट्।

कर्त्तरि कूजति। कूजेत्। कूजतु। अकूजत्। अकूजीत्। चुकूज। कूजिता। कूज्यात्। कूजिष्यति। अकूजिष्यत्। भावे कूज्यते। अकूजि। चुकूजे। णिचि कूजयति-ते। अचुकूजत्-त। कृत्सु। कूजनीयम्। कूजनम्। कूजकः॥ कूजी। कूजिता। कूजितः। कूजितुम् क्तिन्नास्ति अ कूजा।

कूजित्वा । संकूज्य । कूजन् । कूजिष्यन् । ण्यन्तस्य तु कूजयिता। कूजयितुम् । कूजयितव्यम् । कूजयित्वा । कूजयन् कूजयमानः । कूज्यमानः । कूजयि-ष्यन् ष्यमाण इत्यादिर्भेदः ।

डु कृञ् करणे तना० सक० उभय० अनिट् ॥

कर्त्तरि करोति कुरुतः कुर्व्वन्ति करोषि कुरुथः कुरुथ करोमि कुर्व्वः कुर्म्मः । कुरुते कुर्व्वाते कुर्वते कुरुषे कुर्व्वाथे कुरुध्वे कुर्व्वहे कुर्म्महे । कुर्य्यात् कुर्व्वीत । करोतु कुरुताम् कुर्व्वन्तु कुरु कुरुतम् कुरुत करवाणि करवाव करवाम । कुरुताम् कुर्व्वाताम् कुर्व्वताम् कुरुष्व कुर्व्वाथाम् कुरुध्वम् करवै करवावहै करवामहै । अकरोत् अकुरुतम् अकुर्व्वन् । अकुरुत अकुर्व्वाताम् अकुर्व्वत । अकार्षीत् अकार्ष्टाम् अकार्षुः । अकृत अकृषाताम् अकृषत । चकार चक्रतुः चक्रुः चकर्थ चक्रव चकृम । चक्रे चक्राते चक्रिरे चकृषे ।

सम्पूर्व्वकस्य तु सञ्चस्करतुः सञ्चस्करुः सञ्चस्करिथ सञ्चस्करिव सञ्चस्करिम । सञ्चस्करे सञ्चस्कराते सञ्चस्करिरे सञ्चस्करिषे । कर्त्ता-सि से । क्रियात् कृषीष्ट संस्कृषीष्ट। करिष्यति-ते अकरिष्यत्-त। कर्म्मणि क्रियते । अकारि अकारिषाताम् अकृषाताम् । चक्रे । कारितासे कर्त्तासे । कारिषीष्ट कृषीष्ट । कारिष्यते करिष्यते । अकारिष्यत अकरिष्यत । णिचि कारयति-ते अचीकरत्-त ।

कारयाम्-बभूव-आस-चकार-चक्रे । कारयितासि-से । कार्य्यात् कारयिषीष्ट । कारयिष्यति-ते । अकारयिष्यत्-त । सनि चिकीर्षति यङि चेक्रीयते । कर्तृत्वम् । करणीयम् । करणम् । कारः । अन्तकरः । कर्म्मकरः । भयङ्करः । प्रियङ्करः । क्षेमङ्करः । क्षेमकारः । कुम्भकारः । कारकः । कारी । कर्त्ता । कृतः । कृतिः । कर्तुम् । क्विपि पुण्यकृत् शुभकृत् सुकृत् दिनकृत् । क्तवतु—चकृवान् । कर्त्तव्यम् । प्रक्रिया क्यप् कृत्या । कृत्वा प्रकृत्य । कृत्यम् । कार्य्यम् । कुर्व्वन् कुर्व्वाणः करिष्यन् ष्यमाणः । ण्यन्तस्य तु कारयिता । कारितः क्तिन्नास्ति युण् कारणा । कारयितव्यः । कारयितुम् । कारयित्वा । प्रकार्य्य । कारयन् माणः कारयि-ष्यन् ष्यमाणः । कर्म्मणि कारिष्यमाणोऽपि । सम्-संस्कारे(सतो गुणान्तरोद्भूपादनायाम्) संस्करोति । वि—विकृतौ आत्म० विकुरुते । प्र-प्रस्तावे प्रकरोति प्रकृत्य प्रकरणम् । अधि-अधिकारे सक० अधिकरोति । अधिकारः । अनु-अनुकरणे अनुकरोति सदृशीकरोति । परा-निर्-आ-निराकरणे पराकरोति निराकरोति निवारयतीत्यर्थः । अप अपकारे आत्म० अपकुरुते अनिष्टं करोति । अपकारः । प्रति—प्रतीकारे प्रतिकरोति घञि तु प्रतीकारः । परि-परिष्कारे परिष्करोति शोधयतीत्यर्थः । आविस्-प्रादुस्-नमस्-साक्षात्-प्रभृतौ तत्तत्करणे । आविष्क-रोति । उरी-उररी-स्वीकारे उरीकरोति । तिरस्-पराभवे सक० तिरस्करोति ।

कृत कीर्त्तने चुरादि० उभ० सक० सेट्।

कर्त्तरि। कीर्त्तयति-ते। कीर्त्तयेत्-त। कीर्त्तयतु-ताम्। अकीर्त्तयत्-त। अचिकीर्त्तत्-त। कीर्त्तयाम्-बभूव-आस-चकार-चक्रे। कीर्त्तयिता-सि-से। कीर्त्त्यात् कीर्त्तयिषीष्ट। कीर्त्तयिष्यति-ते। कर्म्मणि कीर्त्त्यते। अकीर्त्ति।

कृत्सु। कीर्त्तनीयम्। कीर्त्तनम्। कीर्त्तकः। कीर्त्ती। कीर्त्तयिता। कीर्त्तितः। कीर्त्तिः। कीर्त्तना। कीर्त्तयितुम्। कीर्त्तयितव्यः। कीर्त्तयित्वा संकीर्त्त्य। कीर्त्त्यः। कीर्त्तय-न् मानः। कीर्त्त्य-मानः। कीर्त्तयि-ष्यन् ष्यमाणः। कर्म्मणि कीर्त्तिष्यमाणोऽपि।

कृत छेदने तुदा० सक० पर० सेट्।

कर्त्तरि कृन्तति। कृन्तेत्। कृन्ततु। अकृन्तत्। अकर्त्तीत्। चकर्त्त। कर्त्तिता। कृत्यात्। कर्त्तिष्यति कर्त्स्यति।

कर्म्मणि कृत्यते। अकर्त्ति। णिचि कर्त्तयति। कृत्सु। कर्त्तनीयम्। कर्त्तनम्। कर्त्तकः। कर्त्ती। कर्त्तिता। कृत्तः। कृत्तिः। कर्त्तितव्यम्। कर्त्तितुम्। कर्त्तित्वा। संकृत्य। कर्त्त्यः। कृन्तन् कृत्यमानः। कर्त्तिष्यन् ष्यमाणः कर्त्स्यन् स्यमाणः।

क्लृप कल्पने भ्वा० अक० आत्म० लुङि लुटि लृटि लृङि च उभय० वेट् ।

कर्त्तरि कल्पते । कल्पेत । कल्पताम् । अकल्पत । अक्लृपत् अकल्पिष्ट अक्लृप्त । चक्लृपे । कल्प्तासि कल्पितासे कल्प्तासे । कल्प्स्यति कल्पिष्यते कल्प्स्यते । अकल्प्स्यत् अकल्पिष्यत् अकल्प्स्यत् । भावे । कल्प्यते । अकल्पि । णिचि । कल्पयति । अचिकल्पत् । कृत्सु कल्पनीयम् कल्पनम् । कल्पकः । कल्पः । कल्पिता कल्प्ता । क्लृप्तः क्लृप्तिः । कल्पितुम् कल्प्तुम् । कल्पितव्यम् कल्प्तव्यम् । कल्पित्वा क्लृप्त्वा । प्रकल्प्य । कल्प्यः । कल्पमानः । कल्प्स्यन् कल्पिष्यमाणः कल्प्स्यमानः । क्लृपा । क्लृपणः । क्लृपाणः । ण्यन्तस्य तु कल्पयिता । कल्पयितव्यः । कल्पना । कल्पयितुम् । कल्पयित्वा । प्रकल्प्य । कल्पय-न् मानः कल्पयि-ष्यन् ष्यमाणः कर्म्मणि कल्प्यमानः कल्पिष्यमाणोऽपि ।

सम्—सङ्कल्पे सङ्कल्पते मानसवृत्त्या विषयीकरोति वि-विकल्पे विकल्पः सन्देहः सक० विकल्पते अव-सामर्थ्ये पर्य्याप्तौ च अवकल्पते समर्थः पर्य्याप्तो वा भवतीत्यर्थः ।

कृष कर्षणे भ्वा० सक० पर० अनिट् ।

कर्त्तरि । कर्षति । कर्षेत् । कर्षतु । अकर्षत् । अक्राक्षीत् अकार्क्षीत् अकृक्षत् अक्राष्टाम् अकार्ष्टाम् अकृक्षताम् । चकर्ष चकर्षिथ चकृष्ठ । क्रष्टा । कृष्यात् । क्रक्ष्यति । अक्रक्ष्यत् ।

अकर्क्ष कर्ष्टा कर्क्ष्यति अकर्क्ष्यत्

कर्मणि कृष्यते । अकर्षि । णिचि कर्षयति-ते अचीकृषत्-त अचकर्षत्-त । कर्मणि कर्ष्यते अकर्षि ।
कृतस्तु कर्षणीयम् । कर्षणम् । कर्षणः । कर्षकः । कर्षी । कर्षः । कृष्टः । कृष्टिः । क्रष्टुम् कृष्ट्वा
सङ्कृष्य । कर्षम् कृष्यम् । कर्षन् । कृष्यमाणः । क्रक्ष्यन् क्रक्ष्यमाणः ।

## कॄ विक्षेपे तुदादि॰ सक॰ पर॰ सेट् ।

कर्त्तरि किरति । कीर्य्यात् । किरतु । अकिरत् । अकारीत् । अकारिष्टाम् । चकार चकरतुः चकरुः
चकरिथ । करीता करिता । कीर्य्यात् । करीष्यति करिष्यति । अकरीष्यत् अकरिष्यत् ।
कर्मणि कीर्य्यते । अकारि । अकारिषाताम् अकरीषाताम् अकरिषाताम् अकीर्षाताम् ।
चकरे चकरिषे । कारिताहे करीताहे करिताहे । कारिषीष्ट करिषीष्ट कीर्षीष्ट । कारिष्यते
करीष्यते करिष्यते ।
णिचि कारयति । सनि चिकरीषति चिकरिषति चिकीर्षति ।
कृतस्तु । करणीयम् । करणम् । कारकः । करीता करिता । कीर्णः । कीर्णिः । करीतव्यः
करितव्यः । करीतुम् करितुम् । करीत्वा करित्वा । प्रकीर्य्य । कार्य्यः । किरन् कीर्य्यमाणः ।
करीष्यन् करिष्यन् । करीष्यमाणः करिष्यमाणः । कर्मणि कारिष्यमाणोऽपि ।

प्रति-उप-हिंसायां छेदने च सक० प्रतिस्किरति उपस्किरति छिनत्ति हिनस्तु वा। प्रत्यस्किरात् प्रतिचस्कारे। अव-व्रतलोपे अवकिरति अवकीर्णः क्षतव्रतः। सम् सङ्करे (मिश्रीकरणे) सङ्किरति सङ्कीर्णः। वि-दाने विकिरति। प्र-नानाजातीयानामेकत्र समावेशने प्रतिकिरति प्रकीर्णङ्करोति प्रकीर्णः।

क्रन्द क्रन्दने भ्वादिगणीयः अकर्म्मकः पर० सेट्।

कर्त्तरि। क्रन्दति। क्रन्देत्। क्रन्दतु। अक्रन्दत्। अक्रन्दीत्। चक्रन्द। क्रन्दिता। क्रन्द्यात्। क्रन्दिष्यति। अक्रन्दिष्यत्। भावे क्रन्द्यते। अक्रन्दि। णिचि क्रन्दयति। अचिक्रन्दत्।

कृत्सु। क्रन्दनीयम्। क्रन्दनम्। क्रन्दकः। क्रन्दी। क्रन्दिता। क्रन्दितुम्। क्रन्दितव्यम्। क्रन्दित्वा। संक्रन्द्य। क्रन्द्यम्। क्रन्दन् क्रन्दिष्यन्। णयन्तस्य तु क्रन्दयिता। क्रन्दयितुम्। क्रन्दयितव्यम्। क्रन्दयित्वा क्रन्दयन् मानः। क्रन्द्यमानः। क्रन्दयिष्यन् ष्यमाणः। कर्म्मणि क्रन्दिष्यमाणोऽपि।

आङ्-चुरादि० स्पर्द्धापूर्व्वकः सततशब्दकरणे उभयपदी आक्रन्दयति-त। आक्रन्दयेत्। आचिक्रन्दत्-त।

क्रम क्रमणे भ्वा० पर० सक० सेट् ।

कर्त्तरि । क्राम्यति क्रामति । क्राम्येत् क्रामेत् । क्राम्यतु क्रामतु । अक्राम्यत् अक्रामत् । अक्रमीत् । चक्राम । क्रमिता । क्रमिष्यति । अक्रमिष्यत् । कर्म्मणि । क्रम्यते । अक्रमि अक्रामि । णिचि क्रामयति-ते । संक्रामयति-ते । अचिक्रमत्-त । कर्म्मणि क्राम्यते । अक्रामि । क्रामिताहे क्रामयिताहे । क्तत्सु क्रमणीयम् । क्रमणम् । क्रामकः । क्रामी । क्रमिता । क्रान्तः । क्रान्तिः । क्रमितुम् क्रमितव्यम् । क्रमित्वा क्रान्त्वा । संक्रम्य । क्रम्यः । क्राम्यन् क्रामन् । क्रमिष्यन् क्रमिष्यमाणः । ण्यन्तस्य क्रामयिता क्रामितः । क्रामयितुम् । क्रामयितव्यम् । क्तिन्नादित्वे युच् क्रामणा । क्रामयन् माणः क्राम्यमाणः । क्रामयिष्यन् ष्यमाणः । कर्म्मणि क्रामिष्यमाणोऽपि । सनि चिक्रमिषति । परा-पराक्रमे अकर्म्मकः आत्मनेपदी पराक्रमते पराक्रम्यते । सनि पराचिक्रांसते । प्र-उप-उपक्रमे । (आरम्भे) । प्रक्रमते प्रक्रम्यते उपक्रमते उपक्रम्यते । अर्थविशेषेऽपि क्रमेः आत्मनेपदम् वेदे क्रमते बुद्धिः अप्रतिहता वर्त्तते इत्यर्थः । आत्मनेपदी पराक्रमते पराक्रम्यते । अयस्य क्तत्सु अनिट् पराक्रान्ता उपक्रान्ता उपक्रान्तव्यम् । पराक्रान्तव्यम् उत्साहे । सम्—संक्रमे संक्रम्यति संक्रामति वि—विक्रमे विक्रामति विक्राम्यति पादकरणकविक्रमे तु आत्म० विक्रमते

विक्रम्यते वाजी पद्भ्यां चलतीत्यर्थः । अति—अतिक्रमे अति-क्रामति अतिक्रमते वा । उत्—उत्क्रमणे । उत्-क्रामति—क्रम्यति वा आ—आक्रमणे आक्रामति आक्रम्यति वा । ज्योतिर्व्विशिष्टस्योदये तु आत्मनेपदी आक्रमते क्रम्यते वा सूर्य्यः ।

क्री क्रये क्र्यादि० उभयपदी सकर्म्मकः अनिट् ।

कर्त्तरि । क्रीणाति क्रीणीते । क्रीणीयात् क्रीणीयीत । क्रीणातु क्रीणीताम् । अक्रीणात् अक्रीणीत । अक्रैषीत् । अक्रेष्ट । चिक्राय चिक्रिये । क्रेता । क्रीयात् क्रेषीष्ट । क्रेष्यति-ते । अक्रेष्यत्-त । कर्म्मणि क्रीयते । अक्रायि अक्रायिषाताम्, अक्रेषाताम् । क्रायितासे क्रेतासे । क्रायिष्यते क्रेष्यते । णिचि क्रापयति-ते । अचिक्रपत्-त । सनि चिक्रीषति ।

कृत्सु क्रयणीयम् । क्रयणम् । क्रयः । क्रायकः । क्रायी । क्रेता । क्रीतः । क्रीतिः । क्रेतुम् । क्रेतव्यम् । क्रीत्वा परिक्रीय । क्रेयम् । क्रीणन् क्रीणानः क्रीयमाणः । क्रेष्यन् क्रेष्यमाणः । कर्म्मणि क्रायिष्यमाणोऽपि । ण्यन्तस्य क्रापयिता क्रापयितव्यः क्रापयितुम् क्रापयन् माणः । क्रापयिष्यन् ष्यमाणः ।

वि—विक्रये विक्रीणाति विक्रीणीते । प्रति—प्रतिक्रये (विनिमये) । प्रति-क्री णाति णीते ।

परि—नियमेन भृत्यादिना स्वीकरणे परिक्रीणाति यौतें भाटकादिना नियतकालं स्वक्रा-तीत्यर्थः । निर्—निष्क्रये तुल्यमूल्यदाने निष्क्रीणाति तुल्यमूल्यं ददातीत्यर्थः ।

क्रीड़ क्रीड़ायां भ्वादिगणीय अक० पर० सेट् ।

कर्त्तरि क्रीड़ति । क्रीड़ेत् । क्रीड़तु । अक्रीड़त् । अक्रीड़ीत् । चिक्रीड़ । क्रीड़िता । क्रीड्यात् । क्रीड़िष्यति । अक्रीड़िष्यत् । भावे । क्रीड्यते । अक्रीड़ि । णिचि । क्रीड़यति-ते । अचिक्रीड़त्-त ।

कर्म्मणि क्रीड्यते अक्रीड़ि क्रीड़यितासे क्रीड़ितासे । सनि चिक्रीड़िषति ।

कृत्सु । क्रीड़नीयम् क्रीड़नम् । क्रीड़कः । क्रीड़ः । क्रीड़ी क्रीड़िता । क्रीड़ितः । क्तिन्नास्ति अ क्रीड़ा । क्रीड़ितुम् । क्रीड़ितव्यम् । क्रीड़ित्वा । संक्रीड्य । क्रीड्यम् । क्रीड़न् क्रीड़िष्यन् । ण्यन्तस्य क्रीड़यिता । क्रीड़यितुम् । क्रीड़यित्वा । क्रीड़ना । क्रीड़यन् मानः क्रीड्यमानः । क्रीड़यिष्यन् ष्यमाणः कर्म्मणि क्रीड़िष्यमाणः इत्यादि भेदः । सम्पूर्व्व० आत्मने० संक्रीड़ते अव्यक्तशब्दे तु पर० संक्रीड़ति चक्रम् ।

क्रुध कोपे दिवा० अक० उपसर्गपूर्व्वकस्तु सक० पर० अनिट् ।

कर्त्तरि । क्रुध्यति । क्रुध्येत् । क्रुध्यतु । अक्रुध्यत् । अक्रुधत् । चुक्रोध । क्रोद्धा । क्रुध्यात् ।

क्रोत्स्यति । अक्रोत्स्यत् । भावे । क्रुध्यते । अक्रोधि । सोपसर्गस्य भृत्यमभिक्रुध्यति कर्म्मणि भृत्यौ अभिक्रुध्येते । णिचि क्रोधयति । अचुक्रुधत् । कर्म्मणि क्रोध्यते । अक्रोधि । अक्रोधिताबे क्रोधयिताबे ।

कृत्सु । क्रोधनीयम् । क्रोधनम् । क्रोधनः । क्रोधकः । क्रोधः । क्रोधी । क्रोद्धा । क्रुद्धः । क्रुद्धिः । क्रोद्धव्यम् । क्रोद्धुम् । क्रुद्ध्वा । अभिक्रुध्य । क्रोध्यम् । क्रुध्यन् अभिक्रुध्यमानः । क्रोत्स्यन् अभिक्रोत्स्यमानः ।

क्रुश रोदने भ्वा० अक० पर० अनिट् ।

कर्त्तरि । क्रोशति । क्रोशेत् । क्रोशतु । अक्रोशत् । अक्रुशत् । चुक्रोश । क्रोष्टा । क्रुश्यात् । क्रोक्ष्यति । अक्रोक्ष्यत् । भावे क्रुश्यते । अक्रोशि । णिचि क्रोशयति-ते । अचुक्रुशत्-त । क्रोशयितासि-से । कर्म्मणि क्रोश्यते । अक्रोशि क्रोशिताबे क्रोशयिताबे । सनि चुक्रुक्षति ।

कृत्सु क्रोशनीयम् । क्रोशनम् । क्रोशनः । क्रोशकः । क्रोशः । क्रोशी । क्रोष्टा । क्रुष्टः । क्रुष्टिः । [क्रोष्ट]व्यम् । क्रोष्टुम् । क्रुष्ट्वा । आक्रुश्य । क्रोश्यम् । क्रोशन् । क्रुश्यमानः । क्रोक्ष्यन् क्रोक्ष्यमाणः ।

क्लम ग्लानौ दिवा० अक० पर० सेट् ।

कर्त्तरि । क्लाम्यति । क्लाम्येत् । क्लाम्यतु । अक्लाम्यत् । अक्लमत् अक्लमीत् । चक्लाम । क्लमिता । क्लम्यात् । क्लमिष्यति । अक्लमिष्यत् । भावे क्लम्यते अक्लमि । सर्व्वं क्रमवत् । क्रकारस्थाने क्लकारमात्रभेदः ।

क्लिश बाधने क्र्यादिगणीयः सक० पर० वेट् ।

कर्त्तरि । क्लिश्नाति क्लिश्नीतः क्लिश्नन्ति । क्लिश्नीयात् । क्लिश्नातु क्लिशान । अक्लिश्नात् । अक्लेशीत् अक्लिक्षत् । चिक्लेश चिक्लेशिथ चिक्लेष्ट । क्लेशिता क्लेष्टा । क्लेशिष्यति क्लेक्ष्यति । अक्लेशिष्यत् अक्लेक्ष्यत् ।

कर्म्मणि क्लिश्यते । अक्लेशि । अक्लेशिषाताम् अक्लिक्षाताम् । चिक्लिशे । क्लेशितासे क्लेष्टासे । क्लेशिषीष्ट क्लिक्षीष्ट । णिचि क्लेशयति-ते । अचिक्लिशत्-त । कर्म्मणि क्लेश्यते । अक्लेशि । क्लेशितासे क्लेशयितासे ।

कृत्सु । क्लेशनीयम् । क्लेशनम् । क्लेशनः । क्लेशः । क्लेशी । क्लेशिता । क्लेष्टा । क्लिष्टः ।

क्लिष्टिः । क्लेशितुम् क्लेष्टुम् । क्लेशितव्यम् क्लेष्टव्यम् । क्लेशित्वा क्लिष्ट्वा । संक्लिश्य । क्लेशः । क्लिश्नन् क्लिश्नमानः । क्लेशिष्यन् क्लेक्ष्यन् क्लेशिष्यमाणः क्लेक्ष्यमाणः ।

क्लिश उपतापे दिवा० अक० उभय० सेट् ।

कर्त्तरि । क्लिश्यति-ते । क्लिश्येत्-त । क्लिश्यतु-ताम् । अक्लिश्यत्-त । अक्लेशीत् अक्लेशिष्ट । चिक्लेश चिक्लिशे । क्लेशितासि-से । क्लिश्यात् क्लेशिषीष्ट । क्लेशिष्यति-ते । अक्लेशिष्यत्-त । भावे । क्लिश्यते । अक्लेशि । णिचि क्लेशयति-ते । अचिक्लिशत्-त । कर्म्मणि क्लिश्यते । अक्लेशि । क्लेशितासे क्लेशयितासे ।

कृत्सु । क्लेशनीयम् । क्लेशनम् । क्लेशनः । क्लेशकः । क्लेशी । क्लेशः । क्लेशिता । क्लिष्टः । क्लिष्टिः । क्लेशितुम् । क्लेशितव्यम् । क्लिष्ट्वा । संक्लिश्य । क्लेश्यम् । क्लिश्यन् । क्लेशिष्यन् ।

कण शब्दे भ्वादि अक० पर० सेट् ।

कर्त्तरि कणति । कणेत् । कणतु । अकणत् । अकाणीत् अकणीत् । चकाण । कणिता । कण्यात् । कणिष्यति । अकणिष्यत् । भावे कण्यते । अकाणि । णिचि काणयति-ते । अचिकणत्-त ।

कृत्सु। क्वणनीयम्। क्वणनम्। क्वणः। क्वाणः। क्वाणकः। क्वाणी। क्वणिता। क्वणितम्। क्वणितव्यम्। क्वणितुम्। क्वणित्वा। प्रक्वण्य। क्वण्यम्। क्वणन् क्वणिष्यन्।

क्षम सहने दिवा० पर० अक० सेट्।

कर्त्तरि। क्षाम्यति। क्षाम्येत्। क्षाम्यतु। अक्षाम्यत्। अक्षमत् अक्षमीत्। चक्षाम। क्षमिता। क्षम्यात्। क्षमिष्यति। अक्षमिष्यत्। भावे क्षम्यते। अक्षामि अक्षमि। णिचि क्षमयति-ते। अचिक्षमत्-त।

कृत्सु। क्षमणीयम्। क्षमणम्। क्षमः। क्षामी। क्षमिता। क्षान्तः। क्षान्तिः। क्षमितव्यम्। क्षमितुम्। क्षमित्वा क्षान्त्वा। संक्षम्य। क्षम्यम्। क्षाम्यन् क्षमिष्यन्।

क्षम सहने भ्वादि० आत्म० सक० वेट्।

कर्त्तरि क्षमते। क्षमेत। क्षमताम्। अक्षमत। अक्षमिष्ट अक्षंस्त। चक्षमे। क्षमितासे क्षन्तासे। क्षमिषीष्ट क्षंसीष्ट। क्षमिष्यते क्षंस्यते। कर्म्मणि क्षम्यते। अक्षामि।

कृत्सु क्षमणीयम्। क्षमणम्। क्षमः। क्षामकः। क्षामी। क्षमिता क्षन्ता। क्षान्तः। क्षान्तिः।

क्षमा। क्षमितव्यम् क्षन्तव्यम्। क्षमितुम् क्षन्तुम्। क्षमित्वा क्षान्त्वा। सङ्क्रम्य। क्षमः।
क्षममाणः क्षम्यमाणः। क्षमिष्यमाणः।

क्षिप प्रेरणे तुदा॰ उभयपदी सकर्म्मकः अनिट्

कर्त्तरि क्षिपति-ते। क्षिपेत्-त। क्षिपतु-ताम्। अक्षिपत्-त। अक्षैप्सीत् अक्षिप्त। चिक्षेप चिक्षिपे। क्षेप्तासि-से। क्षिप्यात् क्षिप्सीष्ट। क्षेप्स्यति-ते। अक्षेप्स्यत्-त। कर्म्मणि क्षिप्यते। अक्षेपि। णिचि क्षेपयति-ते। अचिक्षिपत्-त। कर्म्मणि क्षेप्यते अक्षेपि। क्षेपिताहे क्षेपयिताहे। कृत्सु क्षेपणीयम्। क्षेपणम्। क्षेपकः। क्षेपः। क्षेपी। क्षेप्ता। क्षिप्तः। क्षिप्तिः। क्षेप्तुम्। क्षिप्त्वा। संक्षिप्य। क्षेप्यम्। क्षिपन् क्षिप्यमाणः। क्षेप्स्यन् क्षेप्स्यमानः।

सम्—संक्षेपकरणे सक॰ संक्षिपति-ते। उत्-ऊर्द्ध्वक्षेपे उत्क्षिपति-ते। अव अधोविक्षेपे अवक्षिपति-ते। प्रति-प्रतिक्षेपे प्रतिक्षिपति-ते। आङ्—आक्षेपे आक्षिपति-ते प्र-प्रक्षेपे प्रक्षिपति-ते।

क्षुध बुभुक्षायाम् दिवा॰ अक॰ पर॰ अनिट्।

कर्त्तरि क्षुध्यति। क्षुध्येत्। क्षुध्यतु। अक्षुध्यत्। अक्षुधत्। चुक्षोध। क्षोद्धा। क्षुध्यात्। क्षोत्स्यति। अक्षोत्स्यत्। भावे। क्षुध्यते। अक्षोधि। चुक्षुधे। क्षोद्धा। क्षुत्सीष्ट।

णिचि क्षोधयति-ते । अचुक्षुधत्-त । कर्म्मणि क्षोध्यते । अक्षोधि ।
कृत्सु । क्षोधनीयम् । क्षोधनम् । क्षोधः । क्षोधकः । क्षोधी । क्षोद्धा । क्षुद्धः । क्षुद्धिः । क्षोद्धुम् ।
क्षुद्धा। संक्षुध्य । क्षोध्यम् । क्षुध्यन् क्षोत्स्यन् ।

क्षुभ सञ्चलने भ्वा॰ अकर्म्मकः आत्मनेपदी सेट् ।

कर्त्तरि । क्षोभते । क्षोभेत । क्षोभताम् । अक्षोभत । अक्षोभिष्ट । चुक्षुभे । क्षोभितासे । क्षोभिषीष्ट । क्षोभिष्यति । अक्षोभिष्यत । भावे क्षुभ्यते । अक्षोभि । णिचि क्षोभयति-ते । अचुक्षुभत्-त । कर्म्मणि क्षोभ्यते । अक्षोभि । क्षोभिताहे क्षोभयिताहे । सनि चुक्षुभिषते ।
कृत्सु क्षोभणीयम् । क्षोभणम् । क्षोभणः । क्षोभः । क्षोभी । क्षोभिता । क्षुभितः निपातनात् क्षुब्धः । क्षुब्धिः । क्षोभितुम् । क्षोभितव्यम् । क्षुभित्वा । संक्षोभ्य । क्षोभ्यम्। क्षोभमाणः क्षोभिष्यमाणः ।

क्षुभ सञ्चलने क्र्यादि॰ परस्मैपदी अकर्म्मकः सेट् ।

क्षुभ्नाति । क्षुभ्नीयात् । क्षुभ्नीताम् । अक्षुभ्नात् । अक्षोभीत् । चुक्षोभ । क्षोभितासि । क्षुभ्यात् । क्षोभिष्यति । अक्षोभिष्यत् । अन्यत् भ्वादिगणीयवत् शतरि विशेषः क्षुभ्नन् ।

क्षुभ सञ्चलने दिवा० सकर्म्मकः परस्मैपदी सेट् ।

णिचि क्षुभ्यते । क्षुभ्येत् । क्षुभ्यतु । अक्षुभ्यत् । लुङादौ सर्व्वत्र क्र्यादिगणीयवत् ।

खन विदारणे भ्वादिगणीय उभयपदी सकर्म्मकः सेट् ।

कर्त्तरि खनति-ते । खनेत्-त । खनतु-ताम् । अखनत्-त । अखनीत् अखानीत् । चखान चख्ने । खनिता । खायात् खन्यात् खनिषीष्ट । खनिष्यति-ते । अखनिष्यत्-त । कर्म्मणि खन्यते खायते । अखानि । णिचि खानयति-ते । अचीखनत्-त । सनि चिखनिषति-ते ।

कृत्सु । खननीयम् । खननम् । खानकः । खनकः । खानः । खानी । खनिता । खातः । खातिः । खनितुम् । खात्वा । सङ्खाय संखन्य । खेयम् । खन-न् मानः । खनिष्यन् ष्यमाणः ।

खाद भक्षणे भ्वादिगणीयः परस्मैपदी सकर्म्मकः सेट् ।

कर्त्तरि । खादति । खादेत् । खादतु ॥ अखादत् । अखादीत् । चखाद । खादिता । खाद्यात् । खादिष्यति । अखादिष्यत् । कर्म्मणि । खाद्यते । अखादि । णिचि परस्मैपदी खादयति । अचखादत् । कर्म्मणि खाद्यते । अखादि । सनि चिखादिषति । कृत्सु । खादनीयम् ।

खादनम् । खादकः । खादः । खादी । खादिता । खादितः । खादित्वा । संखाद्य । खाद्यम् ।
खादन् । खाद्यमानः । खादिष्यन । खादिष्यमाणः ।

ख्या कथने अदादि० उभयपदी सकर्म्मकः अनिट् ।

कर्त्तरि । आद्येषु चतुर्षु लकारेषु रूपं नास्ति । अख्यत् अख्यत । चख्यौ चख्ये । ख्यातासि-से । ख्येयात् ख्यायात् ख्यासीष्ट । ख्यास्यति-ते । अख्यास्यत्-त । कर्म्मणि । ख्यायते । ख्यायेत । ख्यायताम् । अख्यायत । अख्यायि अख्यायिषाताम् अख्यासाताम् । चख्ये । ख्यायितासे ख्यातासे । णिचि ख्यापयति-ते । अचिख्यपत्-त । ख्याप्यते । आख्यापि । ख्यापितासे ख्यापयितासे सनि चिख्यासति-ते । क्वतृषु । ख्यानीयम् ख्यानम् । ख्यायकः । ख्यायी । ख्याता । ख्यातः । ख्यातिः । ख्यातुम् । ख्यात्वा । संख्याय । संख्येयः । आख्यन् आख्यायमानः । आख्यास्यन् । आख्यस्यमानः । वि-आ-विवरणे शास्त्रं व्याचख्ये । सम् सङ्ख्याकरणे घटं सञ्चख्ये । संख्या । उप-आङ्-उपाख्याने उपचख्ये उपाख्यानम् उपाख्या । आ-आख्यायाम् ( संज्ञाकरणे कथाविशेषे च ) आचख्यौ आख्यानम् आख्या । धातुर्निर्दिष्टे ण्वुलि आख्यायिका ।

गण संख्याने अदन्तचुरादि० उभयपदी सकर्म्मकः सेट्।

कर्त्तरि गणयति-ते। गणयेत्-त। गणयतु-ताम्। अगणयत्-त। अजीगणत्-त अजगणत्-त। गणयाम्-बभूव-आस-चकार-चक्रे। गणयितासि-से। गण्यात् गणयिषीष्ट। गणयिष्यति-ते। अगणयिष्यत्-त। कर्म्मणि गण्यते। अगणि। गणयिताहे गणिताहे। सनि जिगणयिषति-ते।

कृत्सु गणनीयम्। गणनम्। गणकः। गणः। गणी। गणयिता। गणितः। गणना। गणयितुम्। गणयित्वा। विगणय्य विगण्य। गण्यः। गणय-न्-मानः गण्यमानः। गणयि-ष्यन्-ष्यमाणः। कर्म्मणि गणिष्यमाणोऽपि। अव-अवज्ञायाम् अवगणयति अवजानाति।

गद भाषणे भ्वादिगणीयः सकर्म्मकः परस्मैपदी सेट्।

कर्त्तरि गदति। गदेत्। गदतु। अगदत्। अगादीत् अगदीत्। जगाद। गदितासि। गद्यात्। गदिष्यति। अगदिष्यत्। कर्म्मणि। गद्यते। अगादि। जगदे। णिचि। गादयति-ते। अजीगदत्-त। कर्म्मणि गाद्यते। अगादि। सनि जिगदिषति। प्रणि-गदति। कृत्सु गदनीयम्।

गदनम्। गादकः। गादः। गादी। गदिता। गदितः। गदितुम्। गदित्वा। आगद्य। गद्यम्। गदन् गद्यमानः। गदिष्यन् गदिष्यमाणः।

गवेष अन्वेषणे अदन्तचुरादि उभयपदी सकर्म्मकः सेट्।

कर्त्तरि। गवेषयति-ते। अजगवेषत्-त। कर्म्मणि। गवेष्यते। अगवेषि। क्तातृषु। गवेषणीयम्। गवेषणम्। गवेषी। गवेषकः। गवेषयिता। गवेषितः। गवेषणा। गवेषयितुम्। गवेषयित्वा। संगवेष्य। गवेष्यम्। गवेषयन् माणः। गवेष्यमाणः। गवेषयि-ष्यन् ष्यमाणः।

गम गतौ भ्वादिगणीयः पर० सकर्म्मकः अनिट्।

कर्त्तरि। गच्छति। गच्छेत्। गच्छतु। अगच्छत्। अगमत्। जगाम। गन्ता। गम्यात्। गमिष्यति। अगमिष्यत्।

कर्म्मणि। गम्यते। अगमि अगंसाताम्। जग्मे। णिचि गमयति-ते। अजीगमत्-त। कर्म्मणि गम्यते। अगमि। अगमिषाताम् अगमयिषाताम्। गमयितासे गमितासे। सनि जिगमिषति। क्तातृषु। गमनीयम् गमनम्। गमः। हृदङ्गमः विहङ्गमः। भुजङ्गमः। भुजगः विहगः

पुरोगः अन्तग इत्यादिः । गमी गामी । गन्ता । गतः । गतिः । गत्वा । गन्तव्यः । सङ्गत्य । संगम्य । गम्यम् । गच्छन् गम्यमानः । गमिष्यन् गमिष्यमाणः ।

सम्—सङ्गतौ अकर्म्मकः आत्मनेपदी संगच्छते । सनि संजिगांसते । अनु—अनुगमने सकर्म्मकः अनुगच्छति सहयीकरोति । उत्—उदये उद्गच्छति ।

गर्ज्ज शब्दे भ्वादिगणीयः अकर्म्मकः परस्मैपदी सेट् ।

कर्त्तरि गर्ज्जति । अगर्ज्जीत् । जगर्ज्ज । गर्ज्जितासि । भावे गर्ज्यते अगर्ज्जि । णिचि गर्ज्जयति-ते । कृत्सु । गर्ज्जनीयम् । गर्ज्जनम् । गर्ज्जकः । गर्ज्जी । गर्ज्जिता । गर्ज्जितः । गर्ज्जना । गर्ज्जितुम् । गर्ज्जितव्यम् । गर्ज्जित्वा । संगर्ज्य । गर्ज्यम् । गर्ज्जन् गर्ज्जिष्यन् ।

गर्ह निन्दायाम् भ्वादिगणीयः आत्मनेपदी सकर्म्मकः सेट् ।

कर्त्तरि गर्हते । अगर्हिष्ट । कर्म्मणि गर्ह्यते । अगर्हि । णिचि गर्हयति-ते । अजिगर्हत्-त । कृत्सु गर्हणीयम् । गर्हणम् । गर्हकः । गर्ही । गर्हिता । गर्हितः । गर्हणा गर्हितुम् । गर्हित्वा । संगर्ह्य । गर्ह्यम् । गर्हमाणः गर्ह्यमाणः गर्हिष्यमाणः ।

गर्ह निन्दायां चुरादिगणीयः उभयपदी सकर्म्मकः सेट्।

गर्हयति-ते। अजगर्हत्-त। कर्मणि गर्ह्यते अगर्हि। कृत्सु गर्हणीयम्। गर्हणम्। गर्हकः। गर्ही। गर्हयिता। गर्हितः। गर्हणा। गर्हयितुम्। गर्हयितव्यम्। गर्हयित्वा। गर्हयन् गर्हयमाणः। गर्ह्यमाणः। गर्हयिष्यन् ष्यमाणः।

गाहृ विलोड़ने भ्वादिगणीयः सकर्म्मकः आत्मनेपदी वेट्।

कर्त्तरि गाहते। गाहेत। अगाहिष्ट अगाढ़। जगाहे। गाहिता गाढ़ा। गाहिषीष्ट घाक्षीष्ट। गाहिष्यते घाक्ष्यते। अगाहिष्यत् अघाक्ष्यत्। कर्म्मणि गाह्यते। अगाहि अगाहिषाताम् अघाक्षाताम्। णिचि। गाहयति-ते। अजीगहत्-त। कर्म्मणि गाह्यते अगाहि। कृत्सु। गाहनीयम् गाहनम्। गाहः। गाहकः। गाही। गाहिता गाढा। गाढ़ः। गाढ़िः। गाहितुम् गाढुम्। गाहित्वा गाढ्वा। अवगाह्य वगाह्य। गाह्यम्। गाहमानः गाह्यमानः। गाहिष्यमाणः घाक्ष्यमाणः। अव-अवगाहे अवगाहते वगाहते।

गुञ्ज कूजने भ्वादिगणीयः अकर्म्मकः परस्मैपदी सेट्।

कर्त्तरि गुञ्जति। अगुञ्जीत्। जुगुञ्ज। भावे गुञ्ज्यते। अगुञ्जि। णिचि गुञ्जयति।

कृतसु गुञ्जनीयम् गुञ्जनम् । गुञ्जकः । गुञ्जी । गुञ्जिता । गुञ्जितम् । गुञ्जा । गुञ्जितुम् । गुञ्जितव्यम् । गुञ्जित्वा । संगुञ्ज्य । गुञ्जम् । गुञ्जन् गुञ्जिष्यन् ।

गुप रक्षणे भ्वादिगणीयः परस्मैपदी सकर्म्मकः वेट् ।

कर्त्तरि गोपायति । गोपायेत् । गोपायतु । अगोपायत् । अगोपायीत् अगोपीत् अगौप्सीत् । गोपायाम्-बभूव-आस-चकार जुगोप । गोपायिता गोपिता गोप्ता । गोपाय्यात् गुप्यात् । गोपायिष्यति गोपिष्यति गोप्स्यति । कर्म्मणि गोपाय्यते गुप्यते । अगोपायि अगोपि ।

णिचि गोपाययति-ते गोपयति-ते । सनि जुगोपायिषति जुगोपिषति जुगुप्सति ।

कृतसु गोपायनीयम् गोपनीयम् । गोपायनम् गोपनम् । गोपायकः गोपकः । गोपायी गोपी । गोपायिता गोपिता गोप्ता । गोपायितः गुप्तः । गोपाया गुप्तिः । गोपायितुम् गोपितुम् गोप्तुम् । गोपायितव्यम् गोपितव्यम् गोप्तव्यम् । गोपायित्वा गोपित्वा गुप्त्वा । संगोपाय्य संगुप्य । णिजन्तस्य संगोपाय्य संगोप्य । गोप्यम् । गोपायन् गोपाय्यमानः । गोपायिष्यन् गोपिष्यन् गोप्स्यन् । गोपायिष्यमाणः गोपिष्यमाणः गोप्स्यमानः ।

गुप निन्दायां भ्वादिगणीयः सकर्म्मकः आत्मनेपदी सेट् ।

कर्त्तरि । जुगुप्सते । जुगुप्सेत । अजुगुप्सिष्ट । जुगुप्साम्-बभूव-आस-चक्रे । कर्म्मणि जुगुप्स्यते । क्षत्प्र । जुगुप्सनीयम् । जुगुप्सनम् । जुगुप्सकः । जुगुप्सी । जुगुप्सिता । जुगुप्सितम् । जुगुप्सा । जुगुप्सितुम् । जुगुप्सितव्यम् । जुगुप्सित्वा । संजुगुप्स्य । जुगुप्सम् । जुगुप्समानः जुगुप्स्यमानः । जुगुप्सिष्यमाणः ।

गुम्फ ग्रन्थने तुदादि० सक० पर० सेट् ।

कर्त्तरि गुम्फति । अगुम्फीत् । जुगुम्फ । गुम्फिता । कर्म्मणि गुम्फ्यते । अगुम्फि । णिचि गुम्फयति । क्षत्प्र गुम्फनीयम् गुम्फनम् । गुम्फः । गुम्फकः । गुम्फी गुम्फिता । गुम्फितः । गुम्फा । गुम्फितुम् । गुम्फित्वा गुफित्वा । संगुम्फ्य । गुम्फयम् । गुम्फन् गुम्फ्यमानः गुम्फि-ष्यन् ष्यमाणः ।

गुर उद्यमे तुदादि० अक० आत्मने० सेट् ।

गुरते । गुरेत । अगुरिष्ट । गुरितासे । भावे । गुर्य्यते । अगुरि । णिचि गुरयति-ते । अजूगुरत्-त । क्षत्प्र गुरणीयम् गुरणम् । गूर्णः । गुरित्वा । गुरमाणः गुरिष्यमाणः ।

गुह संवरणे भ्वादिगणीयः उभयपदी सक० वेट्।

कर्त्तरि गूहति गूहते। अगूहीत् अघुक्षत्। अघुक्षत अगूढ़। अगूहिषातां अघुक्षाताम्। अगूहिषत अघुक्षत। अगूहिषि अघुक्षि। अगूहिष्वहि अगूह्वहि। अगूहिष्महि अघुक्षामहि।

कर्म्मणि गुह्यते। अगूहि। णिचि गूहयति-ते। सनि जुघुक्षति-ते।

कृत्सु गूहनीयम्। गूहनम्। गूहः। गूहकः। गूही। गूहिता गोढ़ा। गूढ़ः। गूढ़िः। गूहितुम् गोढुम्। गूहितव्यम् गोढ़व्यम्। गुहित्वा। गूढ्वा। संगुह्य। गोह्यः। गूहन् गूहमानः गूहिष्यन् ष्यमाणः घ्रक्ष्यन् घ्रक्ष्यमाणः।

गूर बधे दिवादि० सक० आत्म० सेट्।

गूर्य्यते। अगूरिष्ट। णिचि गूरयति। कृत्सु गूरणीयम् गूरणम्। गूरिता। गूर्णः। गूर्य्यमाणः।

गॄ शब्दे क्र्यादिगणीयः सकर्म्मकः परस्मैपदी सेट्।

कर्त्तरि गृणाति। अगारीत्। जगार जगरतुः। गर्त्ता। ग्रियात्। गरिष्यति।

अनु-प्रति—प्रोत्साहने। अनुगृणाति प्रतिगृणाति प्रोत्साहयतीत्यर्थः।

गृध लोभे दिवा॰ सक॰ पर॰ सेट्।

कर्त्तरि गृध्यति। अगृधत् अगर्द्धीत्। कर्म्मणि गृध्यते। अगर्द्धि। कृत्सु गर्द्धनीयम् गर्द्धनम्। गर्द्धनः। गर्द्धकः गर्द्धी। गर्द्धिता। गर्द्धितः। गर्द्धितुम्। गर्द्धितव्यम्। गर्द्धित्वा। गृध्नुः। गर्द्ध्यम्। गृध्यन्। गर्द्धिष्यन् ष्यमाणः।

गॄ गिलने तुदा॰ सक॰ पर॰ सेट्।

कर्त्तरि गिरति गिलति। गिरेत् गिलेत्। अगारीत् अगालीत्। जगार जगाल जगरतुः जगलतुः। गरीता गरिता गलीता गलिता। गीर्य्यात्। गरीष्यति गरिष्यति गलीष्यति गलिष्यति। कर्म्मणि गीर्य्यते। अगारि अगालि।

कृत्सु गरणीयम्। गलनीयम्। गिरणम् गिलनम् गरः गारकः। गारी। गरिता गरीता। गीर्णः। गीर्णिः। गरितुम् गरीतुम्। गरीत्वा गरित्वा। गिरन् गीर्य्यमाणः। गरीष्यन् गरिष्यन् ष्यमाणः। एवं लत्वपक्षे।

उत्—उद्गमने उद्गिरति उद्गारः सम् प्रतिज्ञायाम् आत्म॰ संगिरते संगिरमाणः। सङ्गरः।

गै गाने भ्वादि॰ सक॰ पर॰ अनिट्।

कर्त्तरि गायति। गायेत्। अगासीत्। जगौ। गाता। गेयात्। गास्यति। अगास्यत्।

कर्म्मणि गीयते अगायि। सनि जिगासति यङि जेगीयते।

कृत्सु गानम्। गायनः। गायकः। गाता। गीतम्। गीतिः। गायकः। संगीय। गेयम् कर्त्तरि गेयः। गायन्। गीयमानः। गास्यन् गास्यमानः। वि—निन्दायाम् विगायति। कर्मणि विगीयते।

ग्रन्थ ग्रन्थने क्र्यादि० अक० पर० सेट्।

कर्त्तरि ग्रथ्नाति। ग्रथ्नीयात्। अग्रन्थीत्। जग्रन्थ। जग्रथतुः जग्रन्थतुः जग्रन्थिथ जग्रथिथ। ग्रथ्यात्।

कर्म्मणि ग्रथ्यते। अग्रन्थि। णिचि ग्रन्थयति-ते। अजग्रन्थत्-त।

कृत्सु ग्रन्थनीयम् ग्रन्थनम्। ग्रथनमपि। ग्रन्थः। ग्रन्थकः। ग्रन्थी। ग्रन्थिता। ग्रथितः। ग्रन्थितुम्। ग्रन्थित्वा ग्रथित्वा। संग्रथ्य। ग्रन्थम्। ग्रथ्नन् ग्रथ्यमानः। ग्रन्थिष्यन् ष्यमाणः।

ग्रस भक्षणे भ्वादि० पर० सक० सेट्।

कर्त्तरि ग्रसति। अग्रासीत् अग्रसीत्। जग्रास। कर्म्मणि ग्रस्यते। अग्रासि। णिचि पर० ग्रासयति।

कृत्सु ग्रसनीयम्। ग्रसनम्। ग्रासः। ग्रासकः। ग्रासी। ग्रसिता। ग्रस्तः। ग्रस्तिः। ग्रसितुम् ग्रसितव्यम्। ग्रसित्वा ग्रस्त्वा। संग्रस्य। ग्रस्यः। ग्रसन् ग्रस्यमानः। ग्रसिष्यन् ष्यमाणः।

ग्रह ग्रहणे क्र्यादिगणीयः उभयपदी सक० सेट्।

कर्त्तरि गृह्णाति गृह्णीते। गृह्णीयात् गृह्णीत। गृह्णातु गृह्णीताम्। अगृह्णात् अगृह्णीत। अग्रहीत्। अग्रहीष्ट। जग्राह जगृहतुः जग्रहिथ जगृहे। ग्रहीतास्मि-से। गृह्यात् ग्रहीषीष्ट। ग्रहीष्यति-ते। अग्रहीष्यत्-त। कर्म्मणि गृह्यते। अग्राहि। णिचि। ग्राहयति ते। अजिग्रहत् त। कर्म्मणि ग्राह्यते। अग्राहि।

कृत्सु ग्रहणीयम् ग्रहणम्। ग्रहः ग्राहः। ग्राहकः। ग्राही। ग्रहीता। गृहीतः। गृहीतिः। ग्रहीतुम्। ग्रहीतव्यम्। गृहीत्वा। संगृह्य। ग्राह्यः गृह्यः। गृह्णन् गृह्णानः। ग्रहीष्यन् ष्यमाणः।

सम्-संग्रहे संगृह्णाति। अव-दृष्टिप्रतिबन्धे अवगृह्णाति। नि-निग्रहे (तिरस्कारे) निगृह्णाति। वि-विग्रहे युद्धकरणे समस्तस्य पृथक्करणे च विगृह्णाति युध्यते व्यस्तं करोति वा। आ-आग्रहे आगृह्णाति निर्बध्नाति। प्रति—प्रतिग्रहे स्वीकारे प्रतिगृह्णाति। अनु-अनुग्रहे अनुगृह्णाति।

म्लै विषादे भ्वादिगणीयः अकर्म्मकः परस्मैपदी अनिट्।

कर्त्तरि म्लायति। अम्लासीत्। मम्लौ। म्लायात् म्लेयात्। भावे म्लायते। अम्लायि। णिचि। म्लपयति ते। कृत्सु म्लानीयम् म्लानम्। म्लायकः। म्लायी। म्लानः। म्लानिः। म्लातुम्। म्लातव्यम्। म्लात्वा। संम्लाय। म्लेयम्। म्लायन्। म्लास्यन्।

घट चेष्टायां भ्वादिगणीयः आत्मनेपदी अकर्म्मकः सेट्।

कर्त्तरि घटते। घटेत। घटताम्। अघटत। अघटिष्ट। जघटे। घटिताहे। घटिषीष्ट। घटिष्यते। अघटिष्यत। भावे। घट्यते। अघटि। णिचि घटयति-ते। अजीघटत्-त। सनि जिघटिषते। यङि जाघट्यते।

कृत्सु। घटनीयम्। घटनम्। घटः। घटकः। घटिता। घटितः। स्त्रियामस्त्रि अङ् घटा। घटितुम्। घटितव्यम्। घटित्वा। सङ्घट्य। घट्यम्। घटमानः घटिष्यमाणः। सम्—घटि योजने। सङ्घटयति संयोजयति। वि—घटि वियोजने वि—घटयति वियोजयति।

घट्ट चालने चुरादि० उभयपदी सकर्म्मकः सेट्।

कर्त्तरि घट्टयति-ते। घट्टयेत्-त। घट्टयतु-ताम्। अघट्टयत्-त। अजघट्टत्-त। कर्म्मणि। घट्ट्यते। अघट्टि अघट्टयिषाताम् अघट्टिषाताम्।

कृत्सु। घट्टनीयम्। घट्टनम्। घट्टः। घट्टकः। घट्टी। घट्टयिता। घट्टितः। घट्टना। घट्टयितुम्। घट्टयितव्यम्। घट्टयित्वा। सङ्घट्य। घट्टयन् मानः घट्ट्यमानः। घट्टयिष्यन् ष्यमाणः कर्म्मणि घट्टिष्यमाणश्च।

घुष शब्दे चुरादि० उभय० सक० सेट्।

कर्त्तरि घोषयति-ते। घोषयेत्-त। घोषयतु-ताम्। अघोषयत्-त। अजूघुषत्-त। घोषयितासि-से। कर्म्मणि घोष्यते। अघोषि अघोषयिषाताम् अघोषिषाताम्।

कृत्सु घोषणीयम्। घोषणम्। घोषः। घोषकः। घोषी। घोषयिता। घोषितः। घोषणा। घोषयितुम्। घोषयितव्यम्। घोषयित्वा। सङ्घोष्य। घोष्यः। घोषयन् माणः घोष्यमाणः। घोषयिष्यन् ष्यमाणः।

घुष रवे भ्वादिगणीयः अकर्म्मकः परस्मैपदी सेट्।

कर्त्तरि घोषति। लुङि अघुषत्। णिचि घोषयति-ते। अजूघुषत्-त। कृत्सु घोषिता। घुषितः घुष्टः। घुष्टिः। घोषित्वा। संघुष्य। घोष्यः। घोषन्। घोषिष्यन्।

घूर्ण भ्रमणे तुदादि० उभयपदी अक० सेट्।

कर्त्तरि घूर्णति-ते। घूर्णेत्-त। घूर्णतु-ताम्। अघूर्णत्-त। अघूर्णीत् अघूर्णिष्ट। जुघूर्ण जुघूर्णे। घूर्णितासि-से। घूर्ण्यात् घूर्णिषीष्ट। घूर्णिष्यति-ते। अघूर्णिष्यत्-त। भावे घूर्ण्यते। अघूर्णि। णिचि घूर्णयति-ते। अजुघूर्णत्-त। सनि जुघूर्णिषति-ते।

कृत्सु। घूर्णनीयम्। घूर्णनम्। घूर्णः। घूर्णकः। घूर्णी। घूर्णिता। घूर्णितः। घूर्णा। घूर्णितुम्। घूर्णितव्यम्। घूर्णित्वा। संघूर्ण्य। घूर्णयम्। घूर्णन् मानः। घूर्णिष्यन् ष्यमाणः।

घृष घर्षणे भ्वादिगणीयः पर० सक० सेट्।

कर्त्तरि घर्षति। घर्षेत्। अघर्षीत्। जघर्ष। घर्षिता। घृष्यात्। घर्षिष्यति। अघर्षिष्यत्। कर्म्मणि। घृष्यते। अघर्षि। णिचि घर्षयति-ते। अजीघृषत्-त अजघर्षत्-त। सनि जिघर्षिषति।
कृत्सु घर्षणीयम्। घर्षणम्। घर्षः। घर्षकः। घर्षी। घर्षिता। घृष्टः। घृष्टिः। घर्षितुम्। घर्षितव्यम्। घर्षित्वा घृष्ट्वा। संघृष्य। घर्षः। घर्षन् घृष्यमाणः। घर्षिष्यन् ष्यमाणः।

घ्रा गन्धोपादाने भ्वादिगणीयः सक० ग्रहणमात्रे सक० पर० अनिट्।

कर्त्तरि जिघ्रति। जिघ्रेत्। जिघ्रतु। अजिघ्रत्। अघ्रात् अघ्रासीत्। जघ्रौ जघ्रिथ जघ्राथ। जघ्रिव। घ्राता। घ्रायात् घ्रेयात्। घ्रास्यति। अघ्रास्यत्। भावे कर्म्मणि च घ्रायते। अघ्रायि। णिचि घ्रापयति ते। अजिघ्रपत् त अजिघ्रिपत् त। सनि जिघ्रासति। यङि जेघ्रीयते।
कृत्सु घ्राणीयम्। घ्राणम्। जिघ्रः। व्याघ्रः। घ्रायकः। घ्रायी। घ्राता। घ्राणः घ्रातः।

घ्राति:। घ्रातुम्। घ्रातव्यम्। घ्रात्वा। संघ्राय। घ्रेय:॥ जिघ्रन्। घ्रास्यन्।

चक्ष कथने अदादि० आत्म० सक० सेट्।

कर्त्तरि चष्टे चक्षाते चक्षते चक्षे चक्षाथे चड्ढ्वे चक्षे चक्ष्वहे चक्ष्महे। चक्षीत। चष्टाम्। अचष्ट। अचक्षत् अचक्षत। चख्यौ चख्ये चचक्षे। ख्याताक्षि-ष्टे। ख्यायात् ख्येयात्। ख्यासीष्ट ख्यास्यति ते। सनि चिख्यासति ते। णिचि ख्यापयति ते। अचिख्यपत् त। कर्मणि ख्यायते। तव्यत्सु ख्यानीयम्। ख्यानम्। ख्यायक:। विचक्षण:। ख्यायी। चक्षु:। ख्याता। ख्यात:। ख्याति:। ख्यातुम्। ख्यातव्यम्। ख्यात्वा। संख्याय। आख्येयम्। चक्षाण: ख्यास्यन् ख्यमान:। त्यागार्थे तु न ख्यादेश: समचक्षिष्ट। वि—आ विवरणे व्याचष्टे विवृणोति। व्याख्या।

चकास दीप्तौ अदादि० अकर्मक: परस्मैपदी सेट्।

कर्त्तरि चकास्ति चकास्त: चकासति। अचकासीत्। चकासाम्-बभूव-आस-चकार। भावे चकास्यते। णिचि चकासयति-ते। अचीचकासत्-त अचचकासत्-त। तव्यत्सु चकासनीयम्। चकासनम्। चकास:। चकासक:। चकासी चकासिता। चकासित:। चकासितुम्। चकासित्वा। सञ्चकास्य। चकास्यम्। चकासत् चकासिष्यन्।

चम अदने भ्वादिगणीयः सकर्म्मकः परस्मैपदी सेट् ।

चमति विचमति । आचामति । अचमीत् । चचाम । चमिता । चम्यात् । चमिष्यति । कर्म्मणि चम्यते । अचमि । णिचि परस्मैपदं चमयति । अचीचमत् । सनि चिचमिषति । कृत्सु । चमनीयम् । आचमनम् । आचमः । आचामः । चामकः । चामी । चमिता । चान्तः । चान्तिः । चमितुम् । चमित्वा चान्त्वा । आचम्य । चम्यम् । चमन् । आचामन् । आचम्यमानः । आचमिष्यन् ष्यमाणः ।

चर गमने भ्वादिगणीयः परस्मैपदी सकर्म्मकः सेट् ।

चरति । अचारीत् । चरिता । चरिष्यति । कर्म्मणि चर्य्यते । अचारि । णिचि चारयति-ते । अचीचरत्-त । कर्म्मणि चार्य्यते । अचारि अचारयिषाताम् अचारिषाताम् । यङि चं चूर्य्यते । कृत्सु चरणीयम् । चरणम् । चरः । गोचरः खचरः जलचरः । सञ्चरः । चारः प्रचारः । चारकः । चारी चरिष्णुः चरिष्यम् । चरिता । चरितः । चूर्णिः । चरितुम् । चरित्वा । सञ्चर्य्य । कर्मणि चर्य्यम् भावे चर्य्या । चरन् चर्य्यमाणः चरिष्यन् ष्यमाणः । सम्-संक्रमणे सञ्चरति । उत्-उदये आत्म० उच्चरते ।

चर्च्च अध्ययने चुरा० सक० उभयपदी सेट्।

कर्त्तरि चर्च्चयति-ते। अचिचर्च्चत्-त। कर्म्मणि चर्च्च्यते अचर्च्चि।
कृत्सु चर्च्चनीयम्। चर्च्चनम्। चर्च्चकः। चर्च्चयिता। चर्च्चिता। चर्च्चितः। चर्च्चना।
चर्च्चा। चर्च्चयितुम्। चर्च्चयितव्यम्। चर्च्चयित्वा। सञ्चर्च्च्य। चर्च्चः। चर्च्चयन् मानः। चर्च्चयमानः
चर्च्चयिष्यन् ष्यमाणः। कर्म्मणि चर्च्चिष्यमाणोऽपि।

चर्व्व भक्षणे विकल्पेन चुरादि० सक० उभयपदी पक्षे भ्वादिगणीयः पर० सेट्।

कर्त्तरि चर्व्वयति-ते। चर्व्वति। अचिचर्व्वत्-त अचर्व्वीत्। कर्म्मणि चर्व्व्यते। अचर्व्वि।
कृत्सु चर्व्वणीयम्। चर्व्वणम्। चर्वकः। चर्व्वी। चर्व्वयिता चर्व्विता। चर्व्वितः। चर्व्वणा चर्व्वा।
चर्व्वयितुम् चर्व्वितुम्। चर्व्वयित्वा चर्व्वित्वा। सञ्चर्व्व्य। चर्व्व्यम्। चर्व्वयन् मानः चर्व्वन्।
चर्व्वमाणः। चर्व्वयिष्यन् ष्यमाणः। चर्व्विष्यन् ष्यमाणः। कर्म्मणि चर्व्विष्यमाणोऽपि।

चल चलने भ्वादिगणीयः अकर्म्मकः पर० सेट्।

चलति। अचालीत्। चलिता। चल्यात्। भावे चल्यते। अचालि। णिचि पर० चलयति।
अचीचलत्। कृत्सु चलनीयम्। चलनम्। चलः। चालः। चालकः। चाली। चलितः।

चलितुम् । चलितव्यम् । चलिता । चञ्चलः । चाल्यम् । चलन् चलितवान् ।

चि चयने स्वादिगणीयः उभयपदी द्विकर्म्मकः अनिट् ।

कर्त्तरि चिनोति चिनुते । चिनुयात् चिन्वीत । चिनोतु चिनुताम् । अचिनोत् अचिनुत । अचैषीत् अचेष्टाम् अचेष्ट । चिकाय चिचाय । चिक्यतुः चिच्यतुः । चेतासि से । चीयात् चेषीष्ट । चेष्यति-ते । अचेष्यत्-त । कर्म्मणि चीयते । अचायि । णिचि चापयति ते चाययति ते । चपयतीत्येके । अचीचपत् । सनि चिकीषति-ते । चिचीषति-ते ।

क्रत्यु चयनीयम् । चयनम् । चयः । चायः । चायकः । चायी । चेता । चितः । चितिः । चेतुम् । चेतव्यम् । अग्निचित् । चित्वा । सञ्चित्य । चेयम् । चिन्वन् चिन्वानः । चीयमानः । चेष्यन् ष्यमाणः । चायिष्यमाणः चेष्यमाणः । उप—उपचये वर्द्धने उपचिनोति अप—अपचये (हीनकरणे) अपचिनोति । कर्म्मकर्त्तरि उपचीयते अपचीयते । समुत् अभिउत् समुच्चये समुच्चिनोति अभ्युच्चिनोति ।

चित ज्ञाने भ्वादिगणीयः सकर्म्मकः पर० सेट् ।

चेतति । अचेतीत् । चिचेत । कर्म्मणि चित्यते । अचेति । णिचि । चेतयति-ते । अची-चितत्-त । क्रत्यु चेतनीयम् । चेतनम् । चेतः । चेतकः । अस् चेतः । चेती । चेतिता ।

चित्तः। चित्तिः। णिजन्तस्य चेतना। चेतितुम्। चेतितव्यम्। चेतित्वा। सञ्चित्य। चित्यम्। चेतन्। चित्यमानः। चेतिष्यन् ष्यमाणः।

चिन्त चिन्तने अदन्तचुरादि उभयपदी सकर्म्मकः सेट्।

कर्त्तरि चिन्तयति-ते। अचिचिन्तत्-त। चिन्त्यात् चिन्तयिषीष्ट। कर्म्मणि चिन्त्यते। अचिन्ति अचिन्तयिषाताम् अचिन्तिषाताम्।

कृत्सु। चिन्तनीयम्। चिन्तनम्। चिन्तकः। चिन्ती। चिन्तयिता। चिन्तितः। चिन्तना चिन्ता। चिन्तयितुम्। चिन्तयितव्यम्। चिन्तयित्वा। सञ्चिन्त्य। चिन्त्यम्। चिन्तयन् मानः चिन्त्यमानः। चिन्तयिष्यन् ष्यमाणः। कर्म्मणि चिन्तिष्यमाणश्च।

चुम्ब चुम्बने विकल्पचुरादि० उभयपदी सक० पक्षे भ्वादिगणीयः पर० सेट्।

कर्त्तरि चुम्बयति-ते चुम्बति। चुम्बयेत् त चुम्बेत्। अचुचुम्बत् त अचुम्बीत्। चुम्बयाम्-बभूव-आस-चकार-चक्रे चुचुम्ब। चुम्बयिता चुम्बिता। चुम्ब्यात् चुम्बयिषीष्ट। कर्म्मणि चुम्ब्यते। अचुम्बि।

कृत्सु चुम्बनीयम्। चुम्बनम्। चुम्बकः। चुम्बी। चुम्बयिता चुम्बिता। चुम्बितः। चुम्बना चुम्बा। चुम्बयितुम् चुम्बितुम्। चुम्बयित्वा चुम्बित्वा। सञ्चुम्ब्य। चुम्ब्यम्। चुम्बयन् मानः चुम्ब्यमानः। चुम्बिष्यन्। चुम्बयिष्यन् ष्यमाणः। कर्म्मणि चुम्बिष्यमाणोऽपि।

चुर स्तेये विकल्पचुरादि० उभयपदी पक्षे भ्वादिगणीय: पर० सक० सेट्।

कर्त्तरि चोरयति ते चोरति। अचूचुरत् त अचोरीत्। कर्म्मणि चोर्य्यते चुर्य्यते। अचोरि। अचोरयिषाताम् अचोरिषाताम्२।

कृत्सु चोरणीयम्। चोरणम्। चोर:। चोरक:। चोरी। चोरयिता चोरिता। चोरित:। चोरणा। चूर्त्ति:। चोरयित्वा चोरित्वा। सञ्चोर्य्य सञ्चुर्य्य। चोर्य्य:। चोरयन् माण: चोर्य्यमाण:। चोरेन्। चोरिष्यन्। चोरयिष्यन् ष्यमाण:। कर्म्मणि चोरिष्यमाणोऽपि।

चूर्ण पेषणे चुरादि० सकर्म्मक: उभयपदी सेट्।

चूर्णयति-ते। अचुचूर्णत्-त। कर्म्मणि चूर्ण्यते। अचूर्णि अचूर्णयिषाताम् अचूर्णिषाताम्।

कृत्सु चूर्णनीयम्। चूर्णनम्। चूर्णक:। चूर्णी। चूर्णयिता। चूर्णित:। चूर्णना। चूर्णयितुम्। चूर्णयितव्यम्। चूर्णयित्वा। सञ्चूर्ण्य। चूर्ण्य:। चूर्णयन् मान: चूर्ण्यमान:। चूर्णयिष्यन् ष्यमाण:। कर्म्मणि चूर्णिष्यमाणोऽपि।

चेष्ट चेष्टने भ्वादि० आत्मनेपदी अकर्म्मक: सेट्।

कर्त्तरि चेष्टते। अचेष्टिष्ट। चिचेष्टे। चेष्टितासे। चेष्टिषीष्ट। भावे चेष्ट्यते अचेष्टि।

णिचि पर० चेष्टयति। अचिचेष्टत् अचचेष्टत्। कर्म्मणि चेष्ट्यते। अचेष्टि।
कृत्सु चेष्टनीयम् चेष्टनम्। चेष्टकः। चेष्टी। चेष्टितः। चेष्टा। चेष्टितुम्। चेष्टितव्यम्। चेष्टित्वा। सञ्चेष्ट्य। चेष्ट्यम्। चेष्टमानः। चेष्टिष्यमाणः।

च्यु गतौ भ्वादिगणीयः आत्मनेपदी सकर्म्मकः अनिट्।

कर्त्तरि च्यवते। अच्यविष्ट। चुच्युवे। च्योतासे। च्योषीष्ट। च्योष्यते।
कर्म्मणि च्यूयते। अच्यावि। णिचि च्यावयति-ते। अचुच्यवत्-त।
कृत्सु च्यवनीयम्। च्यवनम्। च्यवनः। च्यवः। च्यावकः। च्यावी। च्योता। च्युतः। च्युतिः। च्योतुम्। च्योतव्यम्। च्युत्वा। संच्युत्य। च्यव्यम् आवश्यके तु च्याव्यम्। च्यवमानः च्यूयमानः। च्योष्यमाणः। कर्म्मणि च्याविष्यमाणोऽपि।

च्युत क्षरणे भ्वादिगणीयः अकर्म्मकः परस्मैपदी सेट्।

कर्त्तरि च्योतति। अच्युतत् अच्योतीत्। चुच्योत। च्योतिता। भावे च्युत्यते। अच्योति। णिचि च्योतयति ते। अचुच्युतत् त।

चुर स्तेये विकल्पचुरादि० उभयपदी पक्षे भ्वादिगणीयः पर० सक० सेट् ।

कर्त्तरि चोरयति ते चोरति । अचूचुरत् त अचोरीत् । कर्म्मणि चोर्य्यते चुर्य्यते । अचोरि । अचोरयिषाताम् अचोरिषाताम्२ ।

कृत्सु चोरणीयम् । चोरणम् । चोरः । चोरकः । चोरी । चोरयिता चोरिता । चोरितः । चोरणा । चूर्णिः । चोरयित्वा चोरित्वा । सञ्चोर्य्य रुञ्चुर्य्य । चोर्य्यः । चोरयन् माणः चोर्य्यमाणः । चोरन् । चोरिष्यन् । चोरयिष्यन् ष्यमाणः । कर्म्मणि चोरिष्यमाणोऽपि ।

चूर्ण पेषणे चुरादि० सकर्म्मकः उभयपदी सेट् ।

चूर्णयति-ते । अचुचूर्णत्-त । कर्म्मणि चूर्ण्यते । अचूर्णि अचूर्णयिषाताम् अचूर्णिषाताम् ।

कृत्सु चूर्णनीयम् । चूर्णनम् । चूर्णकः । चूर्णी । चूर्णयिता । चूर्णितः । चूर्णना । चूर्णयितुम् । चूर्णयितव्यम् । चूर्णयित्वा । सञ्चूर्ण्य । चूर्ण्यः । चूर्णयन् मानः चूर्ण्यमानः । चूर्णयिष्यन् ष्यमाणः । कर्म्मणि चूर्णिष्यमाणोऽपि ।

चेष्ट चेष्टने भ्वादि० आत्मनेपदी अकर्म्मकः सेट् ।

कर्त्तरि चेष्टते । अचेष्टिष्ट । चिचेष्टे । चेष्टितासे । चेष्टिषीष्ट । भावे चेष्ट्यते अचेष्टि ।

णिचि पर॰ चेष्टयति। अचिचेष्टत् अचचेष्टत्। कर्म्मणि चेष्ट्यते। अचेष्टि।
कृत्सु चेष्टनीयम् चेष्टनम्। चेष्टकः। चेष्टी। चेष्टितः। चेष्टा। चेष्टितुम्। चेष्टितव्यम्। चेष्टित्वा। सञ्चेष्ट्य। चेष्ट्यम्। चेष्टमानः। चेष्टिष्यमाणः।

च्यु गतौ भ्वादिगणीयः आत्मनेपदी सकर्म्मकः अनिट्।

कर्त्तरि च्यवते। अच्योष्ट। चुच्युवे। च्योतासे। च्योषीष्ट। च्योष्यते।
कर्म्मणि च्यूयते। अच्यावि। णिचि च्यावयति-ते। अचुच्यवत्-त।
कृत्सु च्यवनीयम्। च्यवनम्। च्यवनः। च्यवः। च्यावकः। च्यावी। च्योता। च्युतः। च्युतिः। च्योतुम्। च्योतव्यम्। च्युत्वा। संच्युत्य। च्यव्यम् आवश्यके तु च्याव्यम्। च्यवमानः च्यूयमानः। च्योष्यमाणः। कर्म्मणि च्याविष्यमाणोऽपि।

च्युत क्षरणे भ्वादिगणीयः अकर्म्मकः परस्मैपदी सेट्।

कर्त्तरि च्योतति। अच्युतत् अच्योतीत्। चुच्योत। च्योतिता। भावे च्युत्यते। अच्योति। णिचि च्योतयति ते। अचुच्युतत् त।

क्तत्सु च्योतनीयम् । च्योतनम् । च्योतः । च्योतकः । च्योती । च्योतिता । च्योतितम् च्युतितम् । च्योतितुम् । च्योतितव्यम् । च्योतित्वा । संच्युत्य । च्योत्यम् । च्युतन् । च्योतिष्यन् ।

छद संवरणे वि० चुरादिगणीयः उभयपदी पक्षे भ्वादिगणीयः उभयपदी सेट् ।

छादयति-ते । छदति-ते । अचिच्छदत्-त अच्छादीत् अच्छदीत् अच्छदिष्ट । कर्मणि छाद्यते छद्यते । अच्छादि ।

क्तत्सु छादनीयम् छदनीयम् । छादनम् छदनम् । छादः छदः । उरश्छदः । छादकः । छादी । इस् छदिः । छादयिता छदिता । छादितः छन्नः । छादना छत्तिः । छादयितुम् छदितुम् । छादयितव्यम् छदितव्यम् । छादयित्वा छदित्वा । संछाद्य संछद्य । छाद्यम् छद्यम् । छादयन् मानः छदन् छदमानः । छाद्यमानः छद्यमानः । छादयिष्यन् ष्यमाणः छदिष्यन् ष्यमाणः ।

छर्द वमने चुरादिगणीयः उभयपदी सकर्मकः सेट् ।

कर्त्तरि छर्दयति-ते । अचच्छर्दत्-त । कर्मणि छर्द्यते अच्छर्दि ।

क्तत्सु छर्दनीयम् । छर्दनम् । छर्दः । छर्दकः । छर्दी । छर्दिता । छर्दितः । छर्दितुम् । छर्दितव्यम् ।

छर्दित्वा। संछर्द्य। छर्द्यः। छर्दयन् मानः। छर्द्यमानः। छर्दयिष्यन् ष्यमाणः। कर्म्मणि छर्दिष्यमाणश्च।

छिद छेदने रुधादिगणीयः उभयपदी सकर्म्मकः अनिट्।

कर्त्तरि छिनत्ति छिन्तः छिन्ते। छिन्द्यात् छिन्दीत। छिनत्तु छिन्ताम्। अच्छिनत् अच्छिन्त। अच्छिदत् अच्छैत्सीत् अच्छित्त। चिच्छेद चिच्छिदे। छेत्तासि-से। छिद्यात् छेत्सीष्ट। छेत्स्यति-ते। कर्म्मणि छिद्यते। अच्छेदि। णिचि च्छेदयति-ते। अचिच्छिदत्-त। कृत्सु छेदनीयम्। छेदनम्। छेदः। छेदकः। छेदी। छेत्ता। छिन्नः। छित्तिः। छेत्तुम्। छेतव्यम्। छित्त्वा। संछिद्य। छेद्यः। छिन्दन् छिन्दानः छिद्यमानः। छेत्स्यन् छेत्स्यमानः। वि—वियोगे विच्छिनत्ति वियुनक्ति विच्छेदः। विच्छित्तिः। उत्—नाशने उच्छिनत्ति नाशयति। उच्छेदः।

जक्ष भक्षणे अदादिगणीयः पर० सक० सेट्।

कर्त्तरि जक्षिति जक्षितः जक्षति जक्षिषि जक्षिथः जक्षिथ जक्षिमि जक्षिवः जक्षिमः। जक्ष्यात्। जक्षितु। अजक्षीत् अजक्षत्। अजक्षीत्। जजक्ष। कर्म्मणि। जक्ष्यते। अजक्षि। णिचि पर० जक्षयति। अजजक्षत्।

कृदन्तेषु जक्षणीयम् जक्षणम्। जक्षः। जक्षकः। जक्षी। जक्षिता। जक्षितः। जग्धा। जक्षितुम्। जक्षितव्यम्। जक्षित्वा। संजक्ष्य। जक्ष्यः। जक्षत्। जक्ष्यमाणः। जक्षिष्यन् ष्यमाणः।

जन जनने दिवा० अक० आत्म० सेट्।

कर्त्तरि जायते। जायेत। अजनि अजनिष्ट अजनिषाताम्। जज्ञे। जनितासे। जनिषीष्ट। भावे जायते जन्यते। अजनि। णिचि परस्मैपदी जनयति। अजीजनत्। कर्म्मणि जन्यते। अजनि अजानि अजनिषाताम् अजानिषाताम् अजनयिषाताम्। कृत्सु जननीयम् जननम्। जनः। अग्रजः। जनकः। दूष्णु-प्रजनिष्णुः। जनिता। जातः। जातिः। जनितुम्। जनितव्यम्। जनित्वा। संजाय संजन्य। जन्यम्। जायमानः जन्यमानः। जनिष्यमाणः। क्वसौ जज्ञिवान्।

जप जपने भ्वादिगणीयः पर० सक० सेट्।

कर्त्तरि जपति। अजापीत् अजपीत्। जजाप। कर्म्मणि जप्यते। अजापि।
णिचि जापयति-ते अजीजपत्-त। कर्म्मणि जाप्यते। अजापि। अजापिषाताम् आजापयिषाताम्।
कृत्सु जपनीयम् जपनम्। जपः। जापः। जापकः। जापी। जपिता। जप्तः। जप्तिः। जपितुम्। जपितव्यम्। जपित्वा जप्त्वा। प्रजप्य। जप्यम्। जपन्। जप्यमानः। जपिष्यन् ष्यमाणः। उप-भेदने उपजपति भिनत्ति। उपजापः।

जल्प कथायां (परमतनिराकरणपूर्व्वकस्वमतस्थापने) भ्वादिगणीयः सक० पर० सेट्।

कर्त्तरि जल्पति। अजल्पीत्। जजल्प। जल्प्यात्। कर्म्मणि जल्प्यते। अजल्पि। णिचि जल्पयति-ते। अजजल्पत्-त। कर्म्मणि जल्प्यते अजल्पि। अजल्पिषाताम् अजल्पयिषाताम्।

कृत्सु जल्पनीयम्। जल्पनम्। जल्पः। जल्पकः। जल्पी। जल्पिता। जल्पितः। जल्पा। जल्पितुम्। जल्पितव्यम्। जल्पित्वा। संजल्प्य। जल्प्यम्। जल्पन्। जल्प्यमानः। जल्पिष्यन् ष्यमाणः।

जस बधे चुरादिगणीयः सक० उभयपदी सेट्। प्रायेण उत्पूर्व्वः।

कर्त्तरि उज्जासयति-ते। उदजीजसत्-त। कर्म्मणि उज्जास्यते। उदजासि।

कृत्सु उज्-जासनीयम्। जासनम्। जासः। जासकः। जासी। जासयिता। जासितः। जासना। जासयितुम्। जासयितव्यम्। जासयित्वा। संजास्य। जास्यम्। जासयन् मानः। जास्यमानः। जासयिष्यन् ष्यमाणः। कर्म्मणि जासिष्यमाणश्च। सर्व्वत्र उत् पूर्व्वं देयम्।

जागृ जागरणे अदादिगणीयः अक० पर० सेट्।

कर्त्तरि जागर्त्ति जागृतः जाग्रति। जागृयात्। जागर्त्तु जागृहि। अजागः अजागरुः। अजागरीत्।

जागराम् बभूव आस चकार जजागार। आमभावपक्षे जजागरतुः। जागरिता। भावे जागर्य्यते। अजागरि। णिचि जागरयति ते अजजागरत् त। कर्म्मणि जागर्य्यते अजागरि अजागारि। कृत्सु जागरणीयम्। जागरणम्। जागरः। जागरकः। जागरी। जागरिता। जागरितः। जागर्य्या। जागरितुम्। जागरितव्यम्। जागरित्वा। प्रजागर्य्य। जागर्य्यम्। जाग्रत्। जागरिष्यन्।

जि जये भ्वादिगणीयः पर० द्विक० अनिट्।

कर्त्तरि जयति। जयेत्। अजैषीत्। जिगाय जिग्यतुः जिगयिथ जिगेथ जिग्यिव जिग्यिम। जेता। जीयात्। जेष्यति। कर्म्मणि जीयते। अजायि। अजायिषाताम् अजेषाताम्। जिग्ये। णिचि जापयति-ते। अजीजपत् त। सनि जिगीषति। वि-परा-आत्मने० विजयते। पराजयते। कृत्सु जयनीयम्। जयनम्। जयः। जयी। जेता। जितः। जितिः। जेतुम्। जेतव्यम्। जित्वा। विजित्य। जेयः। जयन्। जीयमानः। जेष्यन् ष्यमाणः। क्विप् सर्व्वजित्। ष्णुक् जिष्णुः।

जीव प्राणने भ्वादिगणीयः अक० पर० सेट्।

कर्त्तरि जीवति। अजीवीत्। भावे जीव्यते अजीवि। णिचि जीवयति ते। अजीजिवत् त अजिजीवत् त। कृत्सु जीवनीयम्। जीवनम्। जीवः। जीवकः। जीवी। जीविता। जीवितः।

जीवितुम्। जीवितव्यम्। जीवित्वा। संजीव्य। जीव्यः। जीवन्। जीविष्यन्।
उप-आश्रये उपजीवति आश्रयति उपजीवी। उपजीव्यः।

जुष मोदे तुदादिगणीयः आत्मनेपदी सक० सेट्।

कर्त्तरि जुषते। अजोषिष्ट। भावे जुष्यते। अजोषि। णिचि जोषयति-ते। अजूजुषत्-त। क्तत्सु जोषणीयम् जोषणम्। जोषः। जोषकः। जोषी। जोषिता। जुष्टः। जुष्टिः। जोषितुम्। जोषितव्यम्। जोषित्वा। संजुष्य। जुष्यम्। जुषमाणः जोषिष्यमाणः। क्विपि जुट्।

जुष तर्क्षे त्रि० चुरादिगणीयः उभयपदी पक्षे भ्वादिगणीयः पर० सेट्।

कर्त्तरि जोषयति-ते जोषति। अजूजुषत्-त अजोषीत्। क्तत्सु जोषयिता। जोषितः। जोषणा। जोषयितुम् जोषयितव्यम्। जोषयित्वा। संजोष्य। जोष्यः। पक्षे जुष्यः जोषयन् मानः। जोषयिष्यन् ष्यमाणः। अन्यत् तुदादिगणीयवत्।

जृम्भ जृम्भणे भ्वादिगणीयः अकर्म्मकः आत्मनेपदी सेट्।

कर्त्तरि जृम्भते। अजृम्भिष्ट। जजृम्भे। भावे जृम्भ्यते अजृम्भि। णिचि जृम्भयति-ते। यङि जरीजृम्भ्यते। क्तत्सु जृम्भणीयम् जृम्भणम्। जृम्भकः। जृम्भी। जृम्भिता। जृम्भितः। जृम्भा। जृम्भितुम्।

जृम्भितव्यम् । जृम्भित्वा । संजृम्भ्य । जृम्भम् । जृम्भमाणः जृम्भिष्यमाणः ।

जॄ वयोहानौ चि० चुरादिगणीयः उभयपदी पक्षे क्रयादि० पर० अक० सेट् ।

कर्त्तरि जारयति ते पक्षे जृणाति । अजीजरत् त । अजारीत् । क्र्यादि पक्षे जजार जजरतुः ।

जार्य्यात् जारयिषीष्ट । जीर्य्यात् । जारयिष्यति ते जरीष्यति जरिष्यति ।

कृत्सु जरणीयम् जरणीयम् । जारः जरः । जारकः । जारी । जारयिता जरीता जरिता । जारितः जीर्णः । जारणा । जीर्त्तिः । जारयितुम् जरीतुम् जरितुम् । जारयितव्यम् जरीतव्यम् जरितव्यम् । जारयित्वा जीर्त्वा । संजार्य्य संजीर्य्य । जार्य्यम् । जारयन् मानः । जृणन् । जारयिष्यन् जरीष्यन् जरिष्यन् । केचित्तु विकल्पेनेमं मितमाङ्क्तन्मते जरयतीत्यादिरपि ।

जॄ जरायां दिवा० पर० अकर्म्मकः सेट् ।

कर्त्तरि जीर्य्यति । अजरत् अजारीत् । जजार जजरतुः । जरीता जरिता । णिचि जरयति ते ।

कृत्सु जरणीयम् । जरणम् । जरः । जारकः । जारी । जरीता जरिता । जीर्णः । जरा । जरीतुम् जरितुम् । जरीतव्यम् जरितव्यम् । जीर्त्वा । संजीर्य्य । जार्य्यम् । अजर्य्यम् सङ्गतम् । जीर्य्यन् । जरीष्यन् जरिष्यन् ।

ज्ञा बोधने क्र्यादिगणीयः सकर्म्मकः परस्मैपदी अनिट् ।

कर्त्तरि जानाति । अज्ञासीत् । जज्ञौ । ज्ञायात् ज्ञेयात् । ज्ञास्यति । कर्म्मणि ज्ञायते अज्ञायि । णिचि ज्ञापयति ते । अजिज्ञपत् त । सनि आत्मनेपदी जिज्ञासते । प्रतिज्ञाद्यर्थभेदे च आत्मनेपदी प्रति-प्रतिजानीते । अप-अपजानीते निह्नुते इत्यर्थः । संजानीते प्रवर्त्तते इत्यर्थः । कृत्सु ज्ञानीयम् । ज्ञानम् । ज्ञः विज्ञः प्रज्ञः अभिज्ञः । संज्ञा प्रज्ञा । ज्ञायकः । ज्ञायी । ज्ञाता । ज्ञातः । ज्ञातिः । णिजन्तस्य ज्ञापना । ज्ञातुम् ज्ञातव्यम् । ज्ञात्वा । संज्ञाय । ज्ञेयम् । जानन् । प्रतिजानानः । ज्ञायमानः । ज्ञास्यन् । ज्ञास्यमानः । क्वसौ जज्ञिवान् ।

ज्ञा मारणे तोषणे श्रावणे च चुरादि० उभयपदी सकर्म्मकः सेट् ।

कर्त्तरि ज्ञपयति ते । अजिज्ञपत् त । व्यजिज्ञपत् त । कर्म्मणि ज्ञप्यते अज्ञपि अज्ञापि । सनि ज्ञीप्सति । कृत्सु ज्ञपनीयम् । ज्ञपनम् । ज्ञपकः । ज्ञपी । ज्ञपयिता । ज्ञप्तः । आज्ञप्तः । ज्ञप्तिः । विज्ञप्तिः (श्रावणा) ज्ञपयितुम् । ज्ञपयितव्यम् । ज्ञपयित्वा । संज्ञप्य । ज्ञप्यम् । ज्ञापयन् मानः । ज्ञप्यमानः । ज्ञपयिष्यन् ष्यमाणः । नियोगार्थे तु आज्ञापयतीत्यादौ न ह्रस्वः ।

ज्या जरायां क्र्यादिगणीयः अकर्म्मकः पर० सेट्।

कर्त्तरि जिनाति जिनीतः जिनन्ति। जिनीयात्। अज्यासीत्। जिज्यौ जिज्यतुः। जीयात्। ज्यास्यति। भावे जीयते। अज्यायि। णिचि। ज्यापयति ते। अजिज्यपत् त। कृत्सु ज्यानीयम्। ज्यानम्। ज्यायकः। ज्यायी। ज्याता। जिनः। ज्यानिः। ज्यातुम्। ज्यातव्यम्। जित्वा। संजित्य। ज्येयम्। जिनन्। ज्यास्यन्।

ज्वर रोगे भ्वादिगणीयः पर० अकर्म्मकः सेट्।

कर्त्तरि ज्वरति। अज्वारीत्। णिचि ज्वरयति ते। अजिज्वरत् त। कृत्सु ज्वरणीयम्। ज्वरणम्। ज्वारः। ज्वारकः। ज्वारी। ज्वरिता। ज्वरितः। ज्वरा। ज्वरितुम्। ज्वरितव्यम्। ज्वरित्वा। संज्वर्य्य। ज्वर्य्यम्। ज्वरन्। ज्वरिष्यन्। क्विपि जूः।

ज्वल दीप्तौ भ्वादिगणीयः अकर्म्मकः पर० सेट्।

कर्त्तरि ज्वलति। अज्वालीत्। भावे ज्वल्यते। अज्वालि। णिचि ज्वलयति ते ज्वालयति ते। अजिज्वलत् त। उपसर्गे तु प्रज्वलयति क्विपं हित्वा अन्यत्र ज्वरवत् रकारस्थाने लकारमात्रभेदः।

टङ्क विदारणे चुरादिगणीयः उभयपदी सकर्म्मकः सेट् ।

कर्त्तरि टङ्कयति ते । अटटङ्कत् त । कर्म्मणि टङ्क्यते । अटङ्कि ।
कृत्सु टङ्कनीयम् । टङ्कनम् । टङ्कः । टङ्ककः । टङ्की । टङ्किता । टङ्कितः । टङ्का टङ्कना ।
टङ्कयितुम् । टङ्कयितव्यम् । टङ्कयित्वा । उट्टङ्क्य । टङ्क्यम् । टङ्कयन् मानः । टङ्क्यमानः ।
टङ्कयिष्यन् ष्यमाणः । उत्—उल्लेखे उट्टङ्कयति उल्लिखति । उट्टङ्कितः ।

डी नभोगतौ भ्वादिगणीयः आत्मनेपदी अकर्म्मकः सेट् ।

कर्त्तरि डयते । अडयिष्ट । कृत्सु डयनीयम् डयनम् । डयः । डायकः । डायी । डयितः । डीनः ।
डयितुम् । डयितव्यम् । डयित्वा । संडीय । डेयम् । डयमानः । डयिष्यन् ।

ढौक गतौ भ्वादिगणीयः आत्मनेपदी सकर्म्मकः सेट् ।

कर्त्तरि ढौकते । अढौकीत् । डुढौके । कर्म्मणि ढौक्यते । अढौकि । णिचि ढौकयति ते ।
अडुढौकत् त ।
कृत्सु ढौकनीयम् । ढौकनम् । ढौककः । ढौकी । ढौकिता । ढौकितः । ढौका । ढौकितुम् ।
ढौकितव्यम् । ढौकित्वा । संढौक्य । ढौक्यम् । ढौकमानः । ढौक्यमानः । ढौकिष्यमाणः ।

तंस भूषणे वि० चुरादिगणीयः उभयपदी पक्षे भ्वादिगणीयः सकर्म्मकः सेट् ।

कर्त्तरि तंसयति ते तंसति । अतितंसत् त । अतंसीत् । कर्म्मणि तंस्यते । अतंसि ।

कृत्सु तंसनीयम् । तंसनम् । तंसः । तंसकः । तंसी । तंसयिता तंसिता । तंसितः । तंसा तंसना । तंसयितुम् तंसितुम् । तंसयितव्यम् तंसितव्यम् । तंसयित्वा तंसित्वा । अवतंस्य । तंस्यम् । तंसयन् मानः तंस्यमानः । तंसयिष्यन् ष्यमाणः तंसिष्यमाणः ।

तक्ष तनूकरणे भ्वादिगणीयः स्वादिश्च अन्यतार्थे भ्वादि० पर० वेट् ।

कर्त्तरि तक्षति तक्ष्णोति अक्षणार्थे तक्षति । तक्षतः तक्ष्णुतः । अतक्षीत् अतक्षिष्टाम् अतष्टाम् ।

कृत्सु तक्षणीयम् । तक्षणम् । तक्षः । तक्षकः । तक्षी । तक्षिता तष्टा । तष्टः । तष्टिः । तक्षितुम् तष्टुम् । तक्षितव्यम् तष्टव्यम् । तक्षित्वा तष्ट्वा । संतक्ष्य । तक्ष्यम् । तक्षन् तक्ष्णुवन् तक्ष्यमाणः । तक्षिष्यन् तक्ष्यन् । तक्षिष्यमाणः तक्ष्यमाणः । क्विपि काष्ठतट् । प्रनितक्षति ।

तड ताड़ने चुरादि० उभयपदी सकर्म्मकः सेट् ।

कर्त्तरि ताड़यति ते । अतीतड़त् त । कर्म्मणि ताड्यते । अताड़ि ।

कृत्सु ताड़नीयम् ताड़नम् । ताड़ः । ताड़कः । ताड़ी । ताड़यिता । ताड़ितः । ताड़ना ।

ताड़यितुम् । ताड़यितव्यम् । ताड़यित्वा । संताड्य । ताड्यम् । ताड़यन् मानः ताड्यमानः । ताड़यिष्यन् ष्यमाणः । कर्म्मणि ताड़िष्यमाणश्च ।

तन विस्तारे तनादि[८] उभयपदी सकर्म्मकः सेट् ।

कर्त्तरि तनोति तनुतः तन्वन्ति । तनोषि तनुथः तनुथ । तनोमि तन्वः तनुवः तन्मः तनुमः । तनुते तन्वाते तन्वते । तन्यात् तन्वीत । तनोतु तनुताम् । अतनोत् अतनुत । अतानीत् अतनीत् । अतत अतनिष्ट अतनिषाताम् अतनिषत । अतथाः अतनिष्ठाः । ततान तेनतुः तेनुः तेनिथ । तेने । तनितासि से । तन्यात् तनिषीष्ट । तनिष्यति ते ।

कर्म्मणि तन्यते । अतानि । णिचि तानयति । अतीतनत् । सनि तितनिषति ते तितांसति ते । कृत्सु तननीयम् तननम् । तानः । तानकः । तानी । तनिता । ततः । ततिः । तनितुम् । तनितव्यम् । तनित्वा तत्वा । अवतत्य । तान्यम् । तन्वन् तन्वानः । तन्यमानः । तनिष्यन् ष्यमाणः । क्विप् परीतत् । क्वसौ तेनिवान् ।

तप तापे भ्वादिगणीयः परस्मैपदी अकर्म्मकः अनिट्।

कर्त्तरि तपति। अताप्सीत्। तताप तेपतुः तेपिथ ततप्थ। तप्ता। भावे तप्यते। अतापि। णिचि तापयति ते। अतीतपत् त।

कृत्सु तपनीयम्। तपनम्। ल्यु-तपनः। तपः। तापः। णिजन्तस्य परन्तपः द्विषन्तपः।
तापकः। तापी। तप्ता। तप्तः। तप्तिः। तप्तुम्। तप्तव्यम्। तप्त्वा। संतप्य। तप्यम्। तपन् तप्स्यन्।

तप तापे दिवादिगणीयः आत्मनेपदी अकर्म्मकः अनिट्।

कर्त्तरि तप्यते। तप्येत। अन्यत् भ्वादिगणीयवत्। विशेषस्त्वेषः तप्यमानः। तप्स्यमानः।

तम खेदे दिवादिगणीयः पर० अकर्म्मकः सेट्।

कर्त्तरि ताम्यति। अतमत् अतमीत्। तताम तेमतुः। भावे तम्यते। अतामि। णिचि
तमयति ते। अतीतमत् त। कर्म्मणि तम्यते। अतामि अतमि।

कृत्सु तमनीयम् तमनम्। तमः। तमकः। तमी। तमिता। तान्तः। तान्तिः। तमितुम्।
तमितव्यम्। तमित्वा तान्त्वा। संतम्य। तम्यम्। ताम्यन् तमिष्यन्।

तर्क विवाचरणे चुरादिगणीयः उभयपदी सकर्म्मकः सेट्।

कर्त्तरि तर्कयति ते। अततर्कत्। कर्म्मणि तर्क्यते। अतर्कि। कृत्सु तर्कणीयम् तर्कणम्। तर्कः। तर्ककः तर्की। तर्कयिता। तर्कितः। तर्कणा। तर्कयितुम्। तर्कयितव्यम्। तर्कयित्वा। संतर्क्य। तर्क्यम्। तर्कयन् माणः तर्क्यमाणः। तर्कयिष्यन् ष्यमाणः कर्म्मणि तर्किष्यमाणश्च।

तर्ज्ज तिरस्कारे वि० चुरादि० उभयपदी पक्षे भ्वादिगणीयः आत्मने० सकर्म्मकः सेट्।

कर्त्तरि तर्ज्जयति ते तर्ज्जते। अततर्ज्जत् त अतर्ज्जिष्ट। कर्म्मणि तर्ज्ज्यते अतर्ज्जि। कृत्सु तर्ज्जनीयम्। तर्ज्जनम्। तर्ज्जः। तर्ज्जकः। तर्ज्जी। तर्ज्जयिता तर्ज्जिता। तर्ज्जितः। तर्ज्जना तर्ज्जा। तर्ज्जयितुम् तर्ज्जितुम्। तर्ज्जयितव्यम् तर्ज्जितव्यम्। तर्ज्जयित्वा। तर्ज्जित्वा। संतर्ज्ज्य। तर्ज्ज्यम्। तर्ज्जयन् मानः तर्ज्जमानः तर्ज्ज्यमानः। तर्ज्जयिष्यन् ष्यमाणः। कर्म्मणि तर्ज्जिष्यमाणोऽपि। तर्ज्जिष्यमाणः।

तर्द हिंसायां भ्वादिगणीयः पर० सकर्म्मकः सेट्।

कर्त्तरि तर्दति। अतर्दीत्। ततर्द। कर्म्मणि तर्द्यते। अतर्दि। णिचि तर्दयतिते। अततर्दत् त। 

कृत्सु तर्दनीयम्। तर्दनम्। तर्दकः। तर्दः। तर्दी। तर्दिता। तर्दितः। तर्दा। तर्दितुम्। तर्दितव्यम्। तर्दित्वा। संतर्द्य। तर्द्यम्। तर्दन्। तर्द्यमानः। तर्दिष्यन् ष्यमाणः।

तिज तेजने चुरादि० उभयपदी सकर्म्मकः सेट्।

कर्त्तरि तेजयति ते। अतितेजत् त। कर्म्मणि तेज्यते अतेजि। कृत्सु तेजनीयम्। तेजनम्। अपि तेजः। तेजकः। तेजी। तेजयिता। तेजितः। तेजना। तेजयितुम्। तेजयितव्यम्। तेजयित्वा। संतेज्य। तेज्यम्। तेजयन् मानः। तेज्यमानः। तेजयिष्यन् ष्यमाणः कर्म्मणि तेजिष्यमाणश्च। उत्-उद्दीपने उत्तेजयति उद्दीपयति। उत्तेजितः। उत्तेजना।

तिज क्षमायां भ्वादिगणीयः आत्मनेपदी सक० सेट्।

कर्त्तरि तितिक्षते। अतितिक्षिष्ट। कर्मणि तितिक्ष्यते अतितिक्षि। कृत्सु तितिक्षणीयम्। तितिक्षणम्। तितिक्षकः। तितिक्षी। उ-तितिक्षुः। तितिक्षिता। तितिक्षितः। तितिक्षा। तितिक्षितुम्। तितिक्षितव्यम्। तितिक्षित्वा। संतितिक्ष्य। तितिक्ष्यम्। तितिक्षमाणः। तितिक्ष्यमाणः। तितिक्षिष्यमाणः।

तुद व्यथने तुदादिगणीयः उभयपदी सकर्म्मकः अनिट् ।

कर्त्तरि तुदति ते । अतौत्सीत् अतुत्त । तुतोद तुदोदिथ तुतुदे । तोत्तासि से । तुद्यात् तोत्सीष्ट । तोत्स्यति ते । कर्म्मणि तुद्यते अतोदि । णिचि तोदयति ते । अतूतुदत् त । सनि तुतुत्सति ते । कृत्सु तोदनीयम् । तोदनम् । तोदः । तोदकः । तोदी । तोत्ता । तुन्नः । तुत्तिः । त-तोत्त्वम् । तोत्तुम् । तोत्तव्यम् । तुत्त्वा । संतुद्य । तोद्यम् । आतोद्यम् । तुदन् मानः । तुद्यमानः । तोत्स्यन् स्यमानः ।

तुष तोषे दिवादिगणीयः परस्मैपदी अकर्म्मकः अनिट् ।

कर्त्तरि तुष्यति । अतुषत् । तुतोष । तोष्टा । तुष्यात् । तोक्ष्यति । भावे तुष्यते । अतोषि । णिचि तोषयति ते । अतूतुषत् त ।

कृत्सु तोषणीयम् । तोषणम् । तोषः । तोषकः । तोषी । तोष्टा । तुष्टः । तुष्टिः । तोष्टुम् । तोष्टव्यम् । तुष्ट्वा । संतुष्य । तोष्यम् । तुष्यन् । तोक्ष्यन् ।

तृप प्रीतौ दिवादिगणीयः परस्मैपदी अकर्म्मकः प्रीणने सकर्म्मकः वेट् ।

कर्त्तरि तृप्यति । अतर्पीत् अताप्सीत् अतार्प्सीत् अतृपत् । ततर्प ततर्पिथ तत्रप्थ ततर्प्थ ।

तर्पिता त्रप्ता तर्प्ता। तृप्यात्। तर्पिष्यति त्रप्स्यति तर्प्स्यति। भावे कर्म्मणि च तृप्यते। अतर्पि। णिचि तर्पयति ते। कृत्सु तर्पणीयम्। तर्पणम्। तर्पणः। तर्पः। तर्पकः। तर्पी। तर्पिता त्रप्ता तर्प्ता। तृप्तः। तृप्तिः। तर्पितुम् त्रप्तुम् तर्प्तुम्। तर्पितव्यम् त्रप्तव्यम् तर्प्तव्यम्। तर्पित्वा तृप्त्वा। संतृप्य। तृप्यम्। तृप्यन् तृप्यमाणः। तर्पिष्यन् ष्यमाणः त्रप्-स्यन्-तर्प्-स्यन्-स्यमानः।

तृप प्रीतौ प्रीणने च स्वादिगणीय[5]: पर० प्रीतौ अकर्म्मकः प्रीणने सक० सेट्।

कर्त्तरि तृप्नोति तृप्नुतः। अतर्पीत्। ततर्प ततर्पिथ। तर्पिता। तृप्यात्। तर्पिष्यति। कृत्सु तर्पणीयमित्यादि दिवादिगणीयवत्। तर्पिता। तर्पितः। तर्पितुम्। तर्पितव्यम्। तर्पित्वा। तृप्नन् तृप्यमाणः। तर्पि-ष्यन् ष्यमाणः। इति भेदः।

तृष तृष्णायां दिवादिगणीय[4]: पर० अकर्म्मकः सेट्।

कर्त्तरि तृष्यति। अतृषत्। ततर्ष। तर्षिता। तृष्यात्। तर्षिष्यति। भावे तृष्यते। अतर्षि। णिचि तर्षयति ते। अतीतृषत् त अततर्षत् त।

कृत्सु तर्षणीयम् तर्षणम्। तर्षः। तर्षकः। तर्षी। तर्षिता। तर्षितः। तर्षी। तर्षितुम्। तर्षितव्यम्। तर्षित्वा। ङ्नज् तृष्णक्। नङ् तृष्णा। संतृष्य। तृष्यम्। तृष्यन्। तर्षिष्यन्।

तृह हिंसने रुधादि० पर० सकर्म्मकः सेट् तुदादिगणीयस्तु वेट्।

कर्त्तरि तृणेढि तृण्ढः तृंहन्ति तृणेक्षि तृण्ढः तृण्ढ तृणेह्मि तृंह्वः तृंह्मः। तृंह्यात्। तृणेढु। अतृणेट्। अतर्हीत्। ततर्ह। ततृहतुः। तर्हिता। तृह्यात्। तर्हिष्यति। अतर्हिष्यत्। कर्म्मणि तृह्यते। अतर्हि। णिचि तर्हयति ते। अतीतृहत् त। अततर्हत् त। तुदादेस्तु तृहति अतर्हीत् अतृक्षत्। तर्हिता ताढा तर्ढा।

कृत्सु तर्हणीयम्, तर्हणम्। तर्हः। तर्हकः। तर्ही। तर्हिता। तर्हितः। तर्ढा। तर्हितुम्। तर्हितव्यम्। तर्हित्वा। संतृह्य। तृह्यम्। तृंहन् तृह्यमाणः। तर्हि-ष्यन्-ष्यमाणः। तुदादेस्तु तृढः। तृढिः। तृहन्। तर्हि-ष्यन्-ष्यमाणः तर्क्ष्य-न् तर्क्ष्य-माणः।

त्यज त्यागे भ्वादिगणीयः सकर्म्मकः पर० अनिट्।

कर्त्तरि त्यजति। अत्याक्षीत्। तत्याज। तत्यजिथ तत्यक्थ। तत्यजिव। त्यज्यात्। त्यक्ता। त्यक्ष्यति कर्म्मणि त्यज्यते। अत्याजि। णिचि त्याजयति ते। अतित्यजत् त।

कृत्सु त्यजनीयम्। त्यजनम्। त्यागः। त्याजकः। घिनुण् त्यागी। त्यक्ता। त्यक्तः। त्यक्तिः। त्यक्तुम्। त्यक्तव्यम्। त्यक्त्वा। सन्त्यज्य। त्याज्यम्। त्यजन् त्यज्यमानः। त्यक्ष्यन् त्यक्ष्यमाणः।

त्रप लज्जायां भ्वादिगणीयः आत्मनेपदी अकर्म्मकः वेट् ।

कर्त्तरि त्रपते। अत्रपिष्ट अत्रप्त । त्रेपे। त्रपितासे त्रप्तासे। त्रपिषीष्ट त्रप्सीष्ट। भावे त्रप्यते। अत्रापि। णिचि त्रपयति ते त्रापयति ते। अतित्रपत् त ।

कृत्सु त्रपणीयम्। त्रपणम्। त्रापकः। इष्णुच् अपत्रपिष्णुः। त्रपिता त्रप्ता। त्रप्तः। त्रपा। त्रपितुम् त्रप्तुम्। त्रपितव्यम् त्रप्तव्यम्। त्रपित्वा त्रप्त्वा। सन्त्रप्य। त्रप्यम्। त्रपमाणः। त्रपिष्यमाणः त्रप्स्यमानः।

त्रस वासे वा दिवादि० पक्षे भ्वादिगणीयः पर० अकर्म्मकः सेट् ।

कर्त्तरि त्रस्यति त्रसति। अत्रासीत् अत्रसीत्। तत्रास त्रेसतुः तत्रसतुः। त्रसिता। त्रसिष्यति। भावे त्रस्यते। अत्रासि। णिचि त्रासयति ते। अतित्रसत् त ।

कृत्सु त्रसनीयम्। त्रसनम्। त्रासः। त्रासकः। त्रासी। त्रसिता। त्रस्तः। त्रस्तिः। त्रसितुम्। त्रसित्वा। क्नु-त्रस्नुः। सन्त्रस्य। त्रास्यम्। त्रस्यन् त्रसन्। त्रसिष्यन्।

त्रुट द्वैधीभावे अकर्म्मकः वा दिवा० पक्षे तुदादि० सेट् छेदनार्थे तु सक० ।

कर्त्तरि त्रुट्यति त्रुटति। अत्रुटीत्। तुत्रोट। त्रुटिता। त्रुट्यात्। त्रुटिष्यति। भावे त्रुट्यते अत्रोटि। णिचि त्रोटयति ते। अतित्रुटत् त।

कृत्सु तुटनीयम् । तुटनम् । तोटः । तोटकः । तोटी । तुटिता । तुटितः । तुट्टिः । तुटितुम् । तुटितव्यम् । तुटित्वा । संतुट्य । तोटम् । तुट्यन् तुटन् । तुटिष्यन् ।

तै पालने भ्वादिगणीयः आत्मनेपदी सकर्म्मकः अनिट् ।

कर्त्तरि तायते । अतास्त । तत्ने । ताता । तासीष्ट । कर्म्मणि तायते । अतायि । णिचि तापयति ते । अतितपत् त ।

कृत्सु तायणीयम् । तायम् । तायः । तायकः । तायी । ताता । तायः तातः । तातिः । तातुम् । तातव्यम् । तात्वा । सन्ताय । तेयम् । तायमाणः । तास्यमानः । कर्म्मणि तायिष्यमाणश्च ।

त्वर वेगे भ्वादिगणीयः आत्मनेपदी अकर्म्मकः सेट् ।

कर्त्तरि त्वरते । अत्वरिष्ट । तत्वरे । त्वरितासे । भावे । त्वर्य्यते । अत्वारि । णिचि त्वरयति ते । अतत्वरत् त । कर्म्मणि अत्वरि अत्वारि ।

कृत्सु त्वरणीयम् । त्वरणम् । त्वारः । त्वारकः । त्वारी । त्वरिता । त्वरितः तूर्णः । तूर्णिः । त्वरा । त्वरितव्यम् । त्वरित्वा । सन्त्वर्य्य । त्वार्य्यम् । त्वरमाणः णिचः त्वर्य्यमाणः । त्वरिष्यमाणः ।

दण्ड दण्डने अदन्तचुरादि० उभयपदी द्विक० सेट् ।

कर्त्तरि दण्डयति ते । अददण्डत् त । दण्डयिताहि से । कर्म्मणि दण्ड्यते अदण्डि ।
कृत्सु दण्डनीयम् । दण्डनम् । दण्डः । दण्डकः । दण्डी । दण्डयिता । दण्डितः । दण्डना । दण्डयितुम् । दण्डयितव्यम् । दण्डयित्वा । सन्दण्ड्य । दण्ड्यः । दण्डयन् मानः दण्ड्यमानः । दण्डयिष्यन् ष्यमाणः । कर्म्मणि दण्डिष्यमाणश्च ।

दन्श दंशने भ्वादिगणीयः पर० सकर्म्मकः अनिट् ।

कर्त्तरि दशति । दशेत् । दशतु । अदशत् । अदाङ्क्षीत् अदाङ्क्ष्टाम् । ददंश ददंशतुः ददशतुः । दश्यात् । दङ्क्ष्यति । कर्म्मणि दश्यते । अदंशि । णिचि दंशयति-ते । अददंशत्-त । सनि दिदङ्क्षति । यङि दंदश्यते ।
कृत्सु दंशनीयम् । दंशनम् । दंशकः । दंशः । दंशी । दंष्टा । दष्टः । दष्टिः । ष्ट्रन्-दंष्ट्रा । दंष्टुम् । दंष्टव्यम् । दष्ट्वा । उपदश्य । दंश्यम् । दशन् दंक्ष्यन् दंक्ष्यमाणः । यङ ऊक दंदशूकः ।
सम्—सन्दंशे ( उभयपार्श्वतः कर्षणे ) ( सन्नहनने च ) संदशति । संदंशः । संदंशितः । उप—उपदंशे ( सहभोजने ) मूलकेनोपदशति । णमुल् मूलकोपदंशम् ।

दन्भ दम्भे स्वादिगणीयः परस्मैपदी अक० सेट्।

कर्त्तरि दभ्नोति। दभ्नुतः। अदम्भीत्। ददम्भ देभतुः ददम्भतुः देभिथ ददम्भिथ। भावे दभ्यते। अदम्भि। णिचि दम्भयति-ते। अददम्भत् त। सनि दिदम्भिषति धीप्सति।

कृत्सु दम्भनीयम्। दम्भनम्। दम्भः। दम्भकः। दम्भी। दम्भिता। दब्धः। दब्धिः। दम्भितुम्। दम्भितव्यम्। दम्भित्वा दब्ध्वा। संदभ्य। दम्भ्रः। दभ्नन्। दम्भिष्यन्।

दम दमने दिवादिगणीयः अकर्म्मकः पर० सेट्।

कर्त्तरि दाम्यति। अदमत् अदमीत्। ददाम देमतुः। भावे दम्यते। अदमि। णिचि दमयति-ते। अदीदमत् त। कर्म्मणि अदमि अदामि।

कृत्सु दमनीयम्। दमनम्। दमः। दमकः। दमी। दमिता। दान्तः। दान्तिः। दमितुम्। दमितव्यम्। दमित्वा दान्त्वा। संदम्य। दम्यः। दाम्यन्। दमिष्यन्।

दय दयने गतौ च भ्वादिगणीयः आत्मनेपदी सकर्म्मकः सेट्।

कर्त्तरि दयते। अदयिष्ट। देये। कर्म्मणि दय्यते। अदायि।

कृत्सु दयनीयम् । दयनम् । दायः । दायी । दयिता । दयितः । दया । दयितुम् । दयितव्यम् । दयित्वा । संदय्य । दाय्यम् । दयमानः दयिष्यमाणः ।

दल भेदने भ्वादिगणीयः पर० सकर्म्मकः सेट् ।

कर्त्तरि दलति । अदालीत् । ददाल देलतुः । कर्म्मणि दल्यते । अदालि । णिचि दालयति ते दलयति ते । अदीदलत् त । कर्म्मणि दाल्यते दल्यते अदालि अदलि ।

कृत्सु दलनीयम् । दलनम् । अप्-दलम् । दालकः उद्दालकः । दाली । दलिता । दलितः । दलितुम् । दलितव्यम् । दलित्वा । संदल्य । दाल्यः । दलन् । दलिष्यन् । दलिष्यमाणः ।

दह दाहे भ्वादिगणीयः पर० सकर्म्मकः अनिट् ।

कर्त्तरि दहति । अधाक्षीत् । ददाह देहतुः देहिथ ददग्ध । दग्धा । दह्यात् । धक्ष्यति । कर्म्मणि दह्यते । अदाहि । णिचि दाहयति ते । अदीदहत् त । सनि दिधक्षति यङि दंदह्यते ।

कृत्सु दहनीयम् । दहनम् । दाहः । दाहकः । दाही । दग्धा । दग्धः । दग्धिः । दग्धुम् । दग्धव्यम् । दग्ध्वा । संदह्य । दाह्यः । दहन् दह्यमानः । धक्ष्यन् धक्ष्यमाणः । सनः दिधक्षा । दिधक्षुः । दिधक्षन् । यङः । दंदह्यमानः ।

दा दाने जुहोत्यादिगणीयः उभयपदी सकर्म्मकः अनिट् ।

कर्त्तरि ददाति दत्तः ददति । ददासि दत्थः दत्थ ददामि दद्वः दद्मः । दत्ते ददाते ददते दत्से ददाथे दद्ध्वे ददे दद्वहे दद्महे । दद्यात् ददीत । ददातु दत्ताम् । अददात् अदत्त । अदात् अदित अदिषाताम् । ददौ ददतुः ददिथ ददाथ ददे ददिषे । दातासि-से । देयात् दासीष्ट । दास्यति-ते । कर्म्मणि दीयते । अदायि णिचि दापयति-ते । अदीदपत् । सनि दित्सति-ते । यङि देदीयते ।

कृत्सु दानीयम् । दानम् । दायः । दायकः । दायी । दाता । दत्तः । प्रदत्तः प्रत्तः । नीत्तः । दत्तिः प्रत्तिः प्रदत्तिः । दातुम् । दातव्यम् । दत्त्वा । सन्दाय । देयम् । ददत् ददानः । दास्यन्-स्यमानः । ददिवान् क्त्रिमन् दत्त्रिमः । सनः दित्सा । दित्सुः । दित्सन् ।

दाण् दाने भ्वादिगणीयः परस्मैपदी सकर्म्मकः अनिट् । णित्

कर्त्तरि यच्छति । अदात् । ददौ । कर्म्मणि दीयते । अदायि ।

कृत्सु जुहोत्यादिगणीयवत् । अशिष्टव्यवहारे सम्-आत्मनेपदम् । संयच्छते वेश्यया त्वस्त्वम् ।

दिव क्रीड़ाजिगीषाव्यवहारादिषु दिवा०परस्मैपदी क्रीड़ादौ अक० व्यवहारादौ सक० सेट् ।

कर्त्तरि दीव्यति । अदेवीत् । दिदेव । देविता । दीव्यात् । देविष्यति । भावे कर्म्मणि च दीव्यते । अदेवि । णिचि देवयति-ते । अदीदिवत्-त । सनि दिदेविषति दुद्यूषति । यङि देदीव्यते । कृत्सु देवनीयम् । देवनम् । देवः । देवकः । देवी । देविता । द्यूतः । द्यूतिः । देवितुम् । देवितव्यम् । देवित्वा द्यूत्वा । सन्दिव्य । देव्यम् । दीव्यन् दीव्यमानः । देविष्यन् ष्यमाणः । क्विप् अक्षद्यूः । सनः दुद्यूषा दिदेविषा । दुद्युषुः दिदेविषुः। दुद्यूषन् दिदेविषन् । परि-देवि-परिदेवने परिदेवयति-ते परिदेवना । आ-जिगीषायाम् आदीव्यति । आद्यूनः औदरिकः ।

दिश देशने तुदादिगणीयः उभयपदी सकर्म्मकः अनिट् ।

कर्त्तरि दिशति-ते । अदिक्षत्-त । दिदेश दिदेशिथ दिदिशे । देष्टासि-से । देक्ष्यति-ते । कर्म्मणि दिश्यते । अदेशि । णिचि देशयति-ते । अदीदिशत्-त । सनि दिदिक्षति । यङि देदिश्यते । कृत्सु देशनीयम् । देशनम् । देशः । देशकः । देशी । देष्टा । दिष्टः । दिष्टिः । ण्यन्तस्य देशना । देष्टुम् । देष्टव्यम् । दिष्ट्वा । उपदिश्य । देश्यम् । दिशन् दिशमानः दिश्यमानः । दे-क्ष्यन् क्ष्यमाणः । उप—उपदेशे उपदिशति शिक्षयतीत्यर्थः। सम्—सन्देशे (वाचिकवार्त्ताकथने) सन्दि-

शति। आ—आज्ञायाम् आदिशति। उत्—उद्देशे उद्दिशति। अति—अतिदेशे ( तुल्यतया कथने ) अतिदिशति। अप—अपदेशे अपदिशति अपदेशश्च छलम्। व्यप—संज्ञाकरणे व्यपदिशति सङ्केतितं करोति। नि—नियोगे निदिशति नियुङ्क्ते। निर्—निर्देशे निर्दिशति कथयतीत्यर्थः।

दिह लेपने अदादिगणीय:[2] उभयपदी सकर्म्मकः अनिट्।

कर्त्तरि देग्धि दिग्धः दिहन्ति धेक्षि दिग्धः दिग्ध देह्मि दिह्वः दिह्मः दिग्धे धिक्षे। दिह्यात् दिहीत। देग्धु दिग्धाम्। अधेक् अधेग् अदिग्ध। अधिक्षत्, अदिग्ध-अधिक्षत, अधिक्षाताम्, अधिक्षन्त, अधिक्षथाः-अदिग्धाः, अधिक्षि, अदिह्वहि-अधिक्षावहि, अधिक्षामहि। दिदेह दिदिहे। देग्धासि-से। दिह्यात् धिक्षीष्ट। धेक्ष्यति-ते। कर्म्मणि दिह्यते अदेहि। णिचि देहयति-ते। अदीदिहत्-त। सनि दिधिक्षति-ते। यङि देदिह्यते।

कृत्सु देहनीयम्। देहनम्। देहकः। देही। देग्धा। दिग्धः। दिग्धिः। देग्धुम्। देग्धव्यम्। दिग्ध्वा। उपदिह्य। देह्यम्। दिहन् दिहानः। धेक्ष्यन् धक्ष्यमाणः।

सम्—संशये सक० संदेग्धि। संदेहः। संदिग्धः। संदिहानः।

दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशाधाने भ्वादिगणीयः अकर्म्मकः आत्मनेपदी सेट्।

कर्त्तरि दीक्षते। अदीक्षिष्ट। भावे कर्म्मणि दीक्ष्यते अदीक्षि। णिचि दीक्षयति-ते अदिदीक्षत्-त। क्वतृषु दीक्षणीयम्। दीक्षणम्। दीक्षकः। दीक्षी। दीक्षिता। दीक्षितः। दीक्षा। दीक्षितुम्। दीक्षितव्यम्। दीक्षित्वा। सन्दीक्ष्य। दीक्षमाणः। दीक्षिष्यमाणः।

दीप दीप्तौ दिवादिगणीयः अक० आत्मनेपदी सेट्।

कर्त्तरि दीप्यते। अदीपि-अदीपिष्ट। दिदीपे। दीपितासे। भावे दीप्यते। अदीपि। णिचि दीपयति-ते। अदीदिपत्-त-अदिदीपत्-त। सनि दिदीपिषते। यङि देदीप्यते। क्वतृषु दीपनीयम्। दीपनम्। दीपनः। दीपः। दीपकः। दीपी। दीपिता। दीप्तः। दीप्तिः। ण्यन्तस्य दीपना। दीपितुम्। दीपितव्यम्। दीपित्वा। सन्दीप्य। दीप्यम्। दीप्यमानः। दीपिष्यमाणः। यङः देदीप्यमानः। उत्—उद्दीपने उद्दीपयति उत्तेजयतीत्यर्थः। उद्दीपितः उद्दीपना।

दु अनुतापे भ्वादिगणीयः पर० अक० अनुतापने सक० वेट्।

कर्त्तरि दुनोति दुनुतः दुन्वन्ति। दुनुयात्। दुनोतु। अदुनोत्। अदावीत् अदौषीत्। दुदाव दुदुविथ। दविता दोता। दूयात्। दविष्यति दोष्यति। भावे दूयते। अदावि। णिचि दावयति-ते। अदूदवत्-त। सनि दुदूषति। यङि दोदूयते।

अनीयर् दवनीयम् । दवनम् । दवनः । दवः । दावः । दावकः । अथुच् दवथुः । दावी । दविता दोता । दूनः । दवितुम् दोतुम् । दवितव्यम् दोतव्यम् । दवित्वा दुत्वा । संदूय । दव्यम् आवश्यके तु दाव्यम् । दुन्वन् । दवि-ष्यन्-ष्यमाणः दो-ष्यन्-ष्यमाणः ।

दुःख दुःखितकरणे अदन्तचुरादि उभयपदी सक० सेट् ।

कर्त्तरि दुःखयति-ते । मतान्तरे दुःखापयति-ते । अदुदुःखत्-त । अदुदुःखपत्-त ।

दुष दोषे दिवादिगणीयः परस्मैपदी अकर्म्मकः अनिट् ।

कर्त्तरि दुष्यति । अदुषत् अदुष्यत् । दुदोष । दोष्टा । दोक्ष्यति । भावे दुष्यते । अदोषि । णिचि दूषयति-ते । चित्तविकारे तु दूषयति-ते दोषयति-ते चित्तम् । अदूदुषत्-त । अनीयर् दोषणीयम् । दोषणम् । दोषः । दोषकः । दोषी । णयन्तस्य दूषणीयम् । दूषणम् । दूषकः । दूष्यम् इत्यादि । दुष्टः । दुष्टिः । दोष्टुम् । दोष्टव्यम् । दुष्ट्वा । संदुष्य । दुष्यम् । दुष्यन् ।

दुह दोहने अदादिगणीयः उभयपदी द्विक० अनिट् ।

कर्त्तरि दोग्धि दुग्धः दुहन्ति धोक्षि दुग्धः दुग्ध दोह्मि दुह्वः दुह्मः । दुग्धे दुहाते दुहते धुक्षे दुहाथे धुग्ध्वे । दुह्यात् दुहीत । दोग्धु दुग्धाम् । अधुक्-ग् अदुग्ध । अधुक्षत्, अधुक्षत-

अदुग्ध, अधुक्षाताम् अधुक्षन्त, अधुक्षथाः-अदुग्धाः, अधुक्षि, अधुक्षावहि-अदुह्वहि, अधुक्षामहि। दुदोह दुदोहिथ दुदुहिव दुदुहे। दोग्धासि-से। दुह्यात् धुक्षीष्ट। धोक्ष्यति-ते।

कर्म्मणि दुह्यते। अदोहि। णिचि दोहयति-ते। अदूदुहत्-त। सनि दुधुक्षति। यङि दोदुह्यते।

तत्त्व दोहनीयम्। दोहनम्। दोहः। दोहकः। दोही। दोग्धा। दुग्धम्। दुग्धिः। दोग्धुम्। दोग्धव्यम्। दुग्ध्वा। संदुह्य। दुह्यम् दोह्यम्। दुहन् दुहानः दुह्यमानः। धो-क्ष्यन् क्ष्यमाणः। कामधुक्। कामदुघा गौः। सनः दुधुक्षा दुधुक्षुः। दुधुक्षन्। यङः दोदुह्यमानः।

दू खेदे दिवादिगणीयः आत्मनेपदी अकर्म्मकः सेट्।

कर्त्तरि दूयते। अदविष्ट। दुदुवे। दवितासे। दविषीष्ट। दविष्यते। भावे दूयते। अदावि। णिचि दावयति-ते। अदूदवत्-त। सनि दुदूषते।

तत्त्व दवनीयम् दवनम्। दावः। दावकः। दावी। दविता। दूनः। दूतिः। दवितुम्। दवितव्यम्। दूत्वा। संदूय। दव्यम् आवश्यके तु दाव्यम्। दूयमानः दविष्यमाणः।

दृ आदरे तुदादिगणीयः आत्मनेपदी सकर्म्म० अनिट् प्रायेणाङ्पूर्व्वः।

कर्त्तरि आद्रियते। आदृत। आदद्रे आदद्रिषे। आदर्त्तासे। आदृषीष्ट। आदरिष्यते।

कर्मणि आद्रियते । आदारि । णिचि आदारयति-ते । आदीदरत्-त । सनि आदिदीर्षते ।
कृत्सु आदरणीयम् । आदरणम् । दरः आदरः। आदारकः । तृनि-आदर्त्री । आदर्त्ता । आदृतः ।
आदृतिः । आदर्तुम् । आदर्त्तव्यम् । आदृत्य । आदृत्यः । आद्रियमाणः । आदरिष्यमाणः ।

दृप हर्षे गर्व्वे च दिवादिगणीयः पर० अक० वेट् ।

कर्त्तरि दृप्यति । दृप्येत् । दृप्यतु । अदृप्यत् । अदर्पीत् अद्राप्सीत् अदार्प्सीत् अदृपत् । ददर्प, ददर्पिथ दद्रप्थ । दर्पिता द्रप्ता । दर्पिष्यति द्रप्स्यति । भावे दृप्यते । अदर्पि । णिचि दर्पयति-ते । अदीदृपत्-त अददर्पत्-त । सनि दिदर्पिषति दिदृप्सति । यङि दरीदृप्यते ।
कृत्सु दर्पणीयम् । दर्पणम् । दर्पणः । दर्पकः । दर्पी । दर्पिता द्रप्ता । दृप्तः । दृप्तिः । दर्पितुम् द्रप्तुम् । दर्पितव्यम् द्रप्तव्यम् । दर्पित्वा दृप्त्वा । संदृप्य । दृप्यः । दृप्यन् दर्पिष्यन् द्रप्स्यन् ।

दृश दर्शने भ्वादिगणीयः पर० सक० अनिट् ।

कर्त्तरि पश्यति । पश्येत् । पश्यतु । अपश्यत् । अदर्शत् अद्राक्षीत् । ददर्श, ददर्शिथ-दद्रष्ठ, ददृशिव ।
द्रष्टा । द्रक्ष्यति । कर्म्मणि दृश्यते । अदर्शि अदर्शिषाताम् अदृक्षाताम् । दर्शितासे द्रष्टासे ।
दर्शिषीष्ट दृक्षीष्ट । णिचि दर्शयति-ते । अदीदृशत्-त अददर्शत्-त । सनि आत्म० दिदृक्षते ।

कृत्सु दर्शनीयम् दर्शनम् । दर्शः । सुदर्शनः सुदर्शः । दर्शकः । दर्शी । द्रष्टा । दृष्टः । दृष्टिः । ण्यन्तस्य दर्शितः । एवं दर्शना । द्रष्टुम् दर्शयितुम् । द्रष्टव्यम् दर्शयितव्यम् । दृष्ट्वा दर्शयित्वा । संदृश्य संदर्श्य । दृश्यम् दर्श्यम् । पश्यन् दर्शयन् मानः दृश्यमानः दर्श्यमानः । द्रक्ष्यन् द्रक्ष्यमाणः । क्वसु ददृशिवान् ददृश्वान् । कर्म्मणि दर्शिष्यमाणश्च । ण्यन्तस्य दर्शयिष्यन् ष्यमाणः । सनः दिदृक्षा । दिदृक्षुः । दिदृक्षमाणः । अण्यन्तस्य कर्म्मणः कर्तृत्वे आत्मनेपदं दर्शयते राजा भृत्यान् ।

दृ विदारे क्र्यादिगणीयः पर० सक० सेट् ।

कर्त्तरि दृणाति । अदारीत् अदारिष्टाम् । ददार, दद्रतुः-ददरतुः, ददरिथ । दरीता दरिता । दीर्य्यात् । दरीष्यति दरिष्यति । कर्म्मणि दीर्य्यते । अदारि । दद्रे ददरे । णिचि दारयति-ते । अददरत्-त । दिदरीषति दिदरिषति दिदीर्षति ।

कृत्सु दरणीयम् । दरणम् । दारः । दारकः । दारी । दरीता दरिता । दीर्णः । दीर्णिः । दरीतुम् दरितुम् । दरीतव्यम् दरितव्यम् । दीर्त्वा । संदीर्य्य । दार्य्यम् । दृणन् दीर्य्यमाणः । दरीष्यन् दरिष्यन् । दरिष्यमाणः दरीष्यमाणः कर्म्मणि दारिष्यमाणश्च । अस्य कर्म्मकर्त्तरि दीर्य्यते केचित्तु दिवादावेनं पठित्वा दीर्य्यतीत्यपि रूपमाहुः ।

देव देवने भ्वादिगणीयः आत्मनेपदी अक० सेट् ।

कर्त्तरि देवते । अदेविष्ट । दिदेवे । भावे देव्यते । अदेवि । णिचि देवयति-ते अदिदेवत्-त । क्तत्सु देवनीयम् । देवनम् । देवः । देवकः। देवी । देवितुम् । देवितः । देवा । देवितुम् । देवित्वा । संदेव्य । देवमानः । देविष्यमाणः । परि-विलापे परिदेवते । पर्य्यदेविष्ट सा पुर इति भट्टिः ।

देव परिदेवने चुरादिगणीयः आत्मनेपदी सक० सेट् । केचिन्त्विनं दिव इत्याहुः ।

कर्त्तरि देवयते । अदिदेवत । लुटि देवयिता । देवयितुम् । देवना । देवयितव्यम् । देवयित्वा । देवयमानः देवयिष्यमाणः इत्यादिभेदः । अन्यत् भ्वादिगणीयवत् ।

दो खण्डने दिवादिगणीयः परस्मैपदी सकर्म्मकः अनिट् ।

कर्त्तरि द्यति द्यतः द्यन्ति । द्येत् । द्यतु । अद्यत् । अदात् । ददौ । दाता । देयात् । कर्म्मणि दीयते । अदायि, अदायिषाताम् अदिषाताम् । ददे । णिचि दापय-ति-ते । अदीदप-त्-त । सनि दित्सति ।

क्तत्सु दानीयम् । दानम् । दायः । दायकः । दायी । दाता । दितः । दितिः । दातुम् । दातव्यम् । दित्वा । संदाय । देयम् । द्यन् । दीयमानः । दा-स्यन् स्यमानः ।

द्यु गतौ अदादिगणीय: पर० सकर्म्मक: अनिट्।

कर्त्तरि द्यौति द्युतः द्युवन्ति। द्युयात्। द्यौतु। अद्यौत्। अद्यौषीत्। दुद्याव दुद्यविथ-दुद्योथ दुद्युविव। द्योता। द्योष्यति। कर्म्मणि द्यूयते। अद्यावि। णिचि द्यावय-ति-ते। अदुद्यव-त्-त। सनि दुद्यूषति।

कृत्सु द्यवनीयम्। द्यवनम्। द्यवः। द्यावकः। द्यावी। द्योता। द्युतः। द्युतिः। द्योतुम्। द्योतव्यम्। द्युत्वा। संद्युत्य। द्यव्यम् द्याव्यम्। द्युवन् द्यूयमानः। द्यो-ष्यन् ष्यमाणः।

द्युत विद्योते भ्वादिगणीय: आत्मनेपदी अकर्म्मक: सेट्।

कर्त्तरि द्योतते। द्योतेत। द्योतताम्। अद्योतत। लुङि उभयपदी अद्युतत् अद्योतिष्ट। दिद्युते। द्योतितासे। द्योतिषीष्ट। भावे द्युत्यते। अद्योति। णिचि द्योतयति-ते अदुद्युतत्। सनि दिद्योतिषते।

कृत्सु द्योतनीयम्। द्योतनम्। द्योतः। द्योतकः। द्योती। द्योतिता। द्युतितम् द्योतितम्। द्युत्तिः विद्युत्। द्योतितुम्। द्योतितव्यम्। द्योतित्वा। संद्युत्य। द्योत्यम्। द्योतमानः द्योतिष्यमाणः।

द्रु द्रवे गतौ च भ्वादिगणीयः पर० द्रवे अक० गतौ सकर्म्मकः अनिट्।

कर्त्तरि द्रवति। द्रवेत्। अदुद्रुवत्। दुद्राव दुद्रविथ-दुद्रोथ, दुद्रुव। द्रोता। द्रोष्यति। कर्म्मणि द्रूयते। अद्रावि। णिचि द्रावय-ति-ते। अदुद्रव-त्-त। सनि दुद्रूषति।

कृत्सु द्रवणीयम्। द्रवणम्। द्रवः। द्रावः। द्रावकः। द्रावी। द्रोता। द्रुतः। द्रुतिः। द्रोतुम्। द्रोतव्यम्। द्रुत्वा। संद्रुत्य। द्रव्यम् द्राव्यम्। द्रवन्। द्रूयमाणः। द्रो-ष्यन् ष्यमाणः।

वि—विद्रवे-पलायने च विद्रवति। उप—उपद्रवे (अनिष्टोत्पादने) उपद्रवति। उपद्रुतः।

द्रुह द्रोहे दिवादिगणीयः पर० उपसर्गे सक० अन्यथा अक० वेट्।

कर्त्तरि श्यत्याय द्रुह्यति। अद्रोहीत्। अध्रुचत्। दुद्रोह दुद्रोहिथ-दुद्रोग्ध-दुद्रोढ। द्रोहिता द्रोग्धा द्रोढ़ा। द्रोहिष्यति ध्रोक्ष्यति। कर्म्मणि भ्रत्योऽभिद्रुह्यते। आद्रोहि आध्रुक्षाताम्-आद्रोहिषाताम्, आद्रोहिषत-आध्रुक्षन्त। आदुद्रुहे-आदुद्रुहिषे-आदुध्रुक्षे। णिचि द्रोहय-ति-ते। अदुद्रुह-त्-त।

कृत्सु द्रोहणीयम्। द्रोहणम्। द्रोहः। द्रोहकः। द्रोही। द्रोहिता द्रोग्धा द्रोढा। द्रुग्धः द्रूढः। द्रुग्धिः द्रूढिः। द्रोहितुम् द्रोग्धुम् द्रोढुम्। द्रोहितव्यम् द्रोग्धव्यम् द्रोढ़व्यम्। द्रुग्ध्वा द्रूढ्वा। संद्रुह्य। द्रोह्यः। द्रुह्यन् अभिद्रुह्यमाणः। द्रोहि-ष्यन् ष्यमाणः। ध्रोक्ष्य-न् माणः। मित्रध्रुक्-ग् मित्रध्रुट्-ड्।

द्विष द्वेषे[2] अदादिगणीयः उभयपदी सक० अनिट् ।

कर्त्तरि द्वेष्टि द्विष्टः द्विषन्ति द्वेक्षि द्विष्टे। द्विष्यात् द्विषीत। द्वेष्टु द्विड्ढि द्वेषाणि द्विष्टाम्। अद्वेट्-ड्, अद्विष्ट। अद्विक्षत् अद्विष्ट। दिद्वेष विद्विषे। द्वेष्टा-सि-से। द्वेक्ष्य-ति-ते। कर्म्मणि द्विष्यते। अद्वेषि। णिचि द्वेषय-ति-ते। अदिद्विष-त्-त।

कृत्सु द्वेषणीयम्। द्वेषणम्। द्वेषः। द्वेषकः। द्वेषी। द्वेष्टा। द्विष्टः। द्विष्टिः। द्वेष्टुम्। द्वेष्टव्यम्। द्विष्ट्वा। सन्द्विष्य। द्वेष्यः। द्विषन् द्विषाणः द्विष्यमाणः। द्वे-क्ष्यन् क्ष्यमाणः।

धा धारणे पोषणे च जुहोत्यादि[3]० उभयपदी सक० अनिट् ।

कर्त्तरि दधाति धत्तः दधति दधासि धत्थः धत्थ दधामि दध्वः दध्मः। धत्ते दधाते दधते धत्से दधाथे धद्ध्वे दधे दध्वहे दध्महे। दध्यात् दधीत। दधातु धत्ताम्। अदधात् अधत्त। अधात् अधित अधिषाताम्। दधौ दधे। धाता-सि-से। धेयात् धासीष्ट। धा-स्यति ते। कर्म्मणि धीयते। अधायि अधायिषाताम्-अधिषाताम्। णिचि धापयति-ते। सनि धित्स-ति-ते।

कृत्सु धानीयम्। धानम्। धायः। धायकः। क्वि उदधिः दधिः। धायी। धाता। हितः। हितिः। अन्तर्द्धा। श्रद्धा। धातुम्। धातव्यम्। हित्वा। सन्धाय। धेयम्। दधत् दधानः। धीयमानः। धा-स्यन् स्यमानः। कर्म्मणि धायिष्यमाणश्च।

सम्—सन्धाने संदधाति। अनुसम्—अनुसन्धाने अनुसंदधाति। वि—विधाने विदधाति। अन्तर्—अन्तर्धाने अन्तर्दधाति। तिरस्—तिरोधाने तिरोदधाति। श्रद्—श्रद्धायाम् श्रद्दधाति। नि—निधाने निदधाति। अभि—अभिधाने अभिदधाति। परि—परिधाने परिदधाति। आ—आधाने आदधाति। प्रनि—प्रणिधाने प्रणिदधाति। सन्नि—सन्निधाने सन्निदधाति। उप-आ-उपाधौ उपादधाति। वि-आ-व्याधौ व्यादधाति। वि अव-व्यवधाने व्यवदधाति। अव-अवधाने अवदधाति। उप-उपधाने (शयनोपकरणभेदकरणे) उपदधाति। सम्-आ-समाधाने समादधाति।

धिन्व प्रीतौ गतौ च भ्वादिगणीयः प्रीतौ अक० प्रीणने गतौ च सक० सेट्।

कर्त्तरि धिनोति धिनुतः धिन्वन्ति धिनोषि धिनुथः धिनुथ धिनोमि धिन्वः-धिनुवः, धिन्मः-धिनुमः। धिनुयात्। धिनोतु। अधिनोत्। अधिन्वीत्। दिधिन्व। धिन्विता। धिन्व्यात्। कर्म्मणि धिन्व्यते। अधिन्वि।

कृत्सु धिन्वनीयम्। धिन्वनम्। धिन्वकः। धिन्वितः। धिन्वित्वा। धिन्वन्। धिन्व्यमानः। धिन्वि-षन्, ष्यमाणः।

धु कम्पे स्वादिगणीयः उभयपदी अकर्म्मकः कम्पने सक० अनिट्।

कर्त्तरि धुनोति धुनुतः धुन्वन्ति धुनोषि धुनोमि धुन्वः-धुनुवः, धुन्मः-धुनुमः। धुनुते धुन्वाते धुन्वते। धुनुयात् धुन्वीत। धुनोतु धुनुताम्। अधुनोत् अधुनुत। पाणिनीयमते अधौषीत मुग्धबोधमते-तु अधावीत् अधुत। दुधाव दुधुवे। धोता-सि-से। धूयात् धोषीष्ट। भावे धूयते। अधावि। णिचि पर० धावयति। अदूधवत्। सनि दुधूषति ते। यङि दोधूयते।

कृत्सु धवनीयम्। धवनम्। धवः। धावकः। धावी। दूत-धवित्रम्। धोता। धुतः। धुतिः। धोतुम्। धोतव्यम्। धुत्वा। सन्धुत्य। धव्यम् धाव्यम्। धुन्वन् धुन्वानः। यङः दोधूयमानः। धोष्यन्।

धुर्व्व हिंसने भ्वादिगणीयः सकर्म्मकः पर० सेट्।

कर्त्तरि धूर्व्वति। अधूर्व्वीत्। दुधूर्व्व। कृत्सु। धुर्व्वणम्। धूर्त्तः। धूर्त्तिः। धूर्त्वा। क्विप् धूः।

धू कम्पे क्र्यादिगणीयः उभयपदी अकर्म्मकः कम्पने सकर्म्मकः वेट्।

कर्त्तरि धुनाति धुनीतः धुनन्ति। धुन्वीते धुनाते धुनते। धुनीयात् धुनीत। धुनोतु धुनीताम्। अधुनात् अधुनीत। केचित्तु धूनातीत्याद्याहुः। धूनाति चम्पकवनानीति कविरहस्यम्। पाणिनीयमते अधावीत् मुग्धबोधमते अधावीत्-अधौषीत्। दुधाव।

धविता-सि-स्मे धोता-सि-स्मे । धूयात् धविषीष्ट-धोषीष्ट । धविष्य-ति-ते-धोष्य-ति-ते । भावे कर्म्मणि च धूयते । अधावि । णिचि पर० धूनयति अदुधूनत् । सनि दुधूष-ति-ते ।

कृत्सु धवनीयम् । धवनम् । धविता । धोता । धूनः । धूनिः । धवितुम् धोतुम् । धवित्वा धूत्वा । संधूय । धुनन् धुनानः । मतान्तरे धूतः । धूतिः । धूनन् धूनानः । धूयमानः । धवि-ष्यन् ष्यमाणः । धो-ष्यन् ष्यमाणः ।

धूप सन्तापने भ्वादिगणीयः परस्मैपदी सकर्म्मकः सेट् ।

कर्त्तरि धूपायति । धूपायेत् । धूपायतु । अधूपायत् । अधूपायीत् अधूपीत् । धूपायाम्-बभूव-आस-चकार-दुधूप । धूपायिता धूपिता । धूपाय्यात् धूप्यात् । धूपायिष्यति धूपिष्यति । कर्म्मणि धूपाय्यते धूप्यते । अधूपायि अधूपि । णिचि धूपायय-ति-ते धूपय-ति-ते । अदुधूपाय-त्-त । अदुधूप-त्-त ।

कृत्सु धूपायनीयम् धूपनीयम् । धूपायनम् धूपनम् । धूपायकः धूपकः । धूपायिता धूपिता । धूपायितः धूपितः । धूपाया धूपा । धूपायितुम् धूपितुम् । धूपायन् धूपयन् । धूपायि-ष्यन् ष्यमाणः । धूपि-ष्यन् ष्यमाणः ।

धृ स्थितौ तुदादिगणीयः आत्मनेपदी अकर्म्मकः अनिट् ।

कर्त्तरि म्रियते । अधृत । दध्रे । धर्त्तासे । धृषीष्ट । धरिष्यते । कर्म्मणि म्रियते । अधारि ।
णिचि धारय-ति-ते । अदीधर-त्-त । कर्म्मणि धार्य्यते । अधारि । सनि दिधरिषते ।
कृत्सु धरणीयम् । धरणम् । धरः । धारः । धारकः । धारी । धृतः । धृतिः । धर्त्तुम् । धर्त्तव्यम् । धृत्वा ।
संधृत्य । धार्य्यम् । म्रियमाणः धरि-ष्यन् ष्यमाणः । णिजन्तस्य धनुर्द्धरः वंशधरः । धारयिता
धारयित्वा धारितः धारणा । धारय-न् माणः धार्य्यमाणः ।
सन्तोषार्थकश्च उभयपदी भ्वादिगणीयः धर-तेति इत्यादि ।

धृष संहतौ हिंसायाञ्च भ्वादिगणीयः परस्मैपदी सकर्म्मकः सेट् ।

कर्त्तरि धर्षति । धर्षेत् । अधर्षीत् । दधर्ष दधृषतुः । धर्षिता । कर्म्मणि धृष्यते अधर्षि
णिचि धर्षय-ति-ते । अदीधृष-त्-त अदधर्ष-त्-त ।
कृत्सु धर्षणीयम् । धर्षणम् । धर्षः । दुर्धर्षणः दुर्धर्षः । धर्षकः । धर्षी । धर्षिता । धर्षितः । धृष्टिः
णयन्तस्य धर्षणा । धर्षितुम् । धर्षितव्यम् । धर्षित्वा धृष्ट्वा । संधृष्य । धृष्यः । धर्षन् धृष्य-
माणः । धर्षि-ष्यन् ष्यमाणः । ञ्जज् धृष्णाक्—क्नु धृष्णुः ।

धृष प्रागल्भ्ये स्वादिगणीयः परस्मैपदी अकर्म्मकः सेट्।

कर्त्तरि धृष्णोति धृष्णुतः। धृष्णुयात्। धृष्णोतु। अधृष्णोत्। अन्यत् सर्व्वं स्वादिगणीयवत् निष्ठायां धृष्टम् धर्षितम् शतरि धृष्णान्, क्त्वा प्रत्यये धर्षित्वा इति भेदः।

धृष अमर्षे वा० चुरादिगणीयः उभयपदी पक्षे स्वादिगणीयः पर० सेट्।

कर्त्तरि धर्षयति-ते। धर्षति। अदीधृषत् अदधर्षत्। अधर्षीत्। धर्षयितासि-से धर्षितासि। धर्षयिष्यति-ते धर्षिष्यति। कर्म्मणि धर्ष्यते धृष्यते। अधर्षि।

कृत्सु धर्षयिता। धर्षणा। धर्षयितुम् धर्षयितव्यम्। धर्षयित्वा। संधर्ष्य। धर्ष्यः। धर्ष-यन्-माणः धर्ष्यमाणः। धर्षयि-ष्यन्-ष्यमाणः। अन्यत् स्वादिगणीयवत्।

धे पाने स्वादिगणीयः परस्मैपदी सकर्म्मकः अनिट्।

कर्त्तरि धयति। धयेत्। धयतु। अधयत्। अदधत् अधात् अधासीत्। दधौ। धाता। धेयात्। कर्म्मणि धीयते। अधायि। णिचि धापयति-ते। अदीधपत्-त। सनि धित्सति। यङि देधीयते।

कृत्सु धानीयम्। धानम्। धायः। धायकः। स्तनन्धयः। स्तनन्धयी। पुष्पन्धयः। धायी। धाता। धितः। धितिः। धातुम्। धातव्यम्। धित्वा। संधाय। धेयम्। धयन् धीयमानः। धा-स्यन् स्यमानः

ध्वन रवे भ्वादिगणीयः पर० अक० अनिट्।

कर्त्तरि ध्वनति। अध्वानीत् अध्वनीत्। दध्वान। भावे ध्वन्यते। अध्वानि। णिचि ध्वनयति-ते ध्वानयति-ते। अदिध्वनत्। कर्म्मणि ध्वन्यते। अध्वानि-अध्वनि।

कृत्सु ध्वननीयम्। ध्वननम्। ध्वानः। ध्वानकः। दू-ध्वनिः। ध्वनिता। ध्वनितः। ध्वनितुम्। ध्वनितव्यम् ध्वनित्वा। सन्ध्वन्य। ध्वन्यः। ध्वनन् ध्वन्यमानः। ध्वनि-ध्यन् ध्यमाणः।

ध्वन शब्दे अदन्तचुरादि उभयपदी० अकर्म्मकः सेट्।

कर्त्तरि ध्वनयति-ते। अदिध्वनत् अध्वनयीत्। ध्वनयिता। भावे ध्वन्यते। अध्वनि।

कृत्सु ध्वनयिता। ध्वनयितुम्। ध्वनयितव्यम्। ध्वनयन् मानः ध्वनयि-ष्यन् ष्यमाणः। अन्यत् भ्वादिगणीयवत्।

ध्वन्स गतौ नाशे च भ्वादिगणीयः आत्मनेपदी गतौ सक० नाशे अक० सेट्।

कर्त्तरि ध्वंसते। अध्वंसिष्ट। दध्वंसे दध्वसे। ध्वस्यात्। कर्म्मणि भावे च ध्वस्यते। अध्वंसि। णिचि ध्वंसयति-ते। अदध्वंसत्-त।

कृत्सु ध्वंसनीयम्। ध्वंसनम्। ध्वंसः। ध्वंसकः। ध्वंसी। ध्वसिता। ध्वस्तः। ध्वस्तिः। ध्वंसितुम्। ध्वंसितव्यम्। ध्वसित्वा ध्वस्त्वा। अपध्वस्य। ध्वंस्यः। ध्वंसमानः। ध्वंसिष्यमाणः।

ध्मा मुखमारुतसंयोजने शब्दे च भ्वादिगणीयः पर० सक० शब्दे अक० सेट् ।

कर्त्तरि धमति । धमेत् । धमतु । अधमत् । अध्मासीत् । दध्मौ दध्मतुः दध्माथ-दध्मिथ । ध्मेयात् ध्मायात् । कर्म्मणि ध्मायते । अध्मायि । णिचि ध्मापयति-ते । अदिध्मपत्-त ।

कृत्सु ध्मानीयम् । ध्मानम् । ध्मायः । नाड़ीन्धमः । ध्मायकः । ध्मायी । ध्मातः । ध्मातिः । ध्मातुम् । ध्मातव्यम् । ध्मात्वा । संध्माय । ध्मेयम् । धमन् ध्मायमानः ध्मास्यन् ध्मास्यमानः । कर्म्मणि ध्मायिष्यमाणश्च । आ—स्फीततायाम् । आधमति उदरम् स्फायते । उरस्याध्मानम् ।

ध्यै चिन्तायां भ्वादिगणीयः पर० सक० अनिट् ।

कर्त्तरि ध्यायति । ध्यायेत् । ध्यायतु । अध्यायत् । अध्यासीत् । दध्यौ । ध्याता । ध्येयात् ध्यायात् । कर्म्मणि ध्यायते । अध्यायि । णिचि ध्यापयति-ते । अदिध्यपत्-त ।

कृत्सु ध्यानीयम् । ध्यानम् । ध्यायः । ध्यायकः । ध्यायी । ध्याता । ध्यातः । ध्यातिः । ध्यातुम् । ध्यातव्यम् । ध्यात्वा । संध्याय । ध्येयम् । ध्यायन् ध्यायमानः। ध्यास्यमानः ध्यायिष्यमाणश्च । क्विप् धीः।

यद्यपि नृततनटनन्दनक्कनाधनाथभिन्नाः सर्व्वे नकारादयो धातवः गणपाठे णकारादिकतया पठितास्तथापि प्रयोगकाले ते नकारादेशेन नादयो भवन्ति पुनश्च त एव प्रादिपूर्व्वकाः णत्वादेशेन णादयो भवन्ति । अतोऽत्र प्रयोगानुसारेण नादय एव प्रदर्श्यन्ते ।

नट अवस्यन्दने (हिंसने) चुरादिगणीयः उभयपदी सकर्म्मकः सेट्। प्रायेणायमुत्पूर्व्वकः।

कर्त्तरि उन्नाटयति-ते। उदनीनटत्-त। कर्म्मणि उन्नाट्यते। उदनाटि।

कृत्सु उन्नाटनीयम् उन्नाटनम्। उन्नाटकः। उन्नाटयिता। उन्नाटितः। उन्नाटना। उन्नाटयितुम्।
उन्नाटयितव्यम्। नाटयित्वा उन्नाट्य। उन्नाट्यम्। उन्नाटय-न् मानः उन्नाट्यमानः।
उन्नाटयि-ष्यन् ष्यमाणः। उन्नाटिष्यमाणश्च। णोपदेशाभावेन नास्य णत्वम् प्रनटति।

नट नृत्ये भ्वादिगणीयः परस्मैपदी अकर्म्मकः सेट्।

कर्त्तरि नटति अनाटीत् अनटीत्। ननाट नेटतुः। भावे नट्यते। अनाटि। णिचि नाटयति।
घटादिषु नटयति-ते। अनीनटत्-ते। कर्म्मणि अनाटि अनटि।

कृत्सु नटनीयम्। नटनम्। नाटः। नाटकः। नाटी। नटिता। नटितः। नटितुम्।
नटितव्यम्। नटित्वा। संनट्य। नाट्यम्। नटन् नटिष्यन्। अस्य णोपदेशतया णत्वम् प्रणटति।

नद शब्दे भ्वादिगणीयः परस्मैपदी अकर्म्मकः सेट्।

कर्त्तरि नदति। अनादीत् अनदीत्। ननाद नेदतुः। भावे नद्यते। अनादि।
णिचि नादयति-ते। अनीनदत्-त।

कृत्सु नदनीयम्। नदनम्। नादः। नादकः। नादी। नदिता। नदितः। नदितुम्। नदितव्यम्। नदित्वा। संनद्य। नाद्यम्। नदन् नदिष्यन्। प्रणिनदति।
प्र-परि-परा-निर्-अन्तर्-पूर्व्वकस्य णत्वं प्रणदति परिणदति पराणदति। निर्णादः अन्तर्णदनम्।

नन्द आनन्दे भ्वादिगणीयः परस्मैपदी अकर्म्मकः सेट्।

कर्त्तरि नन्दति। अनन्दीत्। ननन्द ननन्दतुः। नन्द्यात्। भावे नन्द्यते। णिचि नन्दयति-ते। अननन्दत्।
कृत्सु नन्दनीयम्। नन्दनम्। नन्दः। ण्यन्तस्य ल्यु-नन्दनः। अथुच्-नन्दथुः। नन्दकः। आनन्दी। नन्दिता। नन्दितः। नन्दा। नन्दितुम्। नन्दितव्यम्। नन्दित्वा। संनन्द्य। नन्द्यः। नन्दन् नन्दिष्यन्। प्रादिपूर्व्वस्य न णत्वम्। प्रनन्दतीत्यादि। अभि-अभिनन्दने अभिनन्दति संवर्द्धयति।

नम नमने भ्वादिगणीयः परस्मैपदी सकर्म्मकः अनिट्।

कर्त्तरि नमति। अनंसीत् अनंसिष्टाम्। ननाम नेमतुः। नन्ता। नंस्यति। कर्म्मणि नम्यते। अनामि। णिचि नमयति-ते। अनीनमत्-त। कर्मणि अनामि अनमि। सनि निनंसति। यङि नंनम्यते।

कृत्सु नमनीयम् । नमनम् । नमः । नामकः । नामी । नन्ता । नतः । नतिः । नन्तुम् । नन्तव्यम् । नत्वा । सन्नम्य सन्नत्य । नम्यम् र-नम्रः नमन् नम्यमानः । यङः नंनम्यमानः । नं-स्यन् स्यमानः । प्रादिभ्यो णत्वम् । प्रणमति । प्रणामः । परि-परिणामे आत्म० परिणमते ।

नर्द शब्दे भ्वादिगणीयः परस्मैपदी अकर्म्मकः सेट् ।

कर्त्तरि नर्दति । अनर्दीत् । ननर्द ननर्दतुः । नर्दिता । भावे नर्द्यते । अनर्दि । णिचि नर्दयति-ते । अननर्दत्-त ।

कृत्सु नर्दनीयम् । नर्दनम् । नर्दकः । नर्दी । नर्दिता । नर्दितः । नर्दा । नर्दितुम् । नर्दितव्यम् । नर्दित्वा । संनर्द्य । नर्द्यम् । नर्दन् नर्दिष्यन् । प्रणर्दति परिणर्दनम् ।

नश नाशे अदर्शने च दिवादिगणीयः परस्मैपदी अकर्म्मकः वेट् ।

कर्त्तरि नश्यति । अनेशत् अनशत् । ननाश नेशतुः । नशिता नंष्टा नङ्क्ष्टा । नश्यात् । नशिष्यति नङ्क्ष्यति । भावे नश्यते । अनाशि । णिचि परस्मैपदी नाशयति । अनीनशत् । सनि निनशिषति निनङ्क्षति ।

कृत्सु नशनीयम्। नशनम्। नाशः। नाशकः। नाशी। नशिता नंष्टा नङ्क्ष्टा। नष्टः नग्धः। नष्टिः नग्धिः। नशितुम् नंष्टुम् नङ्क्ष्टुम्। नशितव्यम् नंष्टव्यम् नङ्क्ष्टव्यम्। नशित्वा नष्ट्वा नग्ध्वा। विनश्य। नाश्यम्। नश्यन् नशिष्यन् नङ्क्ष्यन्। प्रादिभ्यः शकारस्याविकृतिस्थले णत्वं प्रणश्यति अन्यत्र विकारे तु न, प्रनष्टः प्रनग्धः।

णह बन्धने दिवादिगणीयः उभयपदी सकर्म्मकः अनिट्।

कर्त्तरि नह्यति-ते। अनात्सीत् अनद्ध। ननाह नेहतुः नेहे। नद्धा-सि से। कर्म्मणि नह्यते। अनाहि। णिचि नाहयति। अनीनहत्।

कृत्सु नहनीयम्। नहनम्। नाहः। नाहकः। नद्धा। नद्धः। नद्धिः। नद्धुम्। नद्धव्यम्। नद्ध्वा। संनह्य। नाह्यम्। नह्य-न् मानः। नत्-स्यन् स्यमानः। प्रादिभ्यो णत्वं प्रणह्यति। प्रणद्धः। सम्-कवचधारणे अकर्म्मकः संनह्यति-ते। परि—परिणाहे (विशालतायाम्) अक० परिणह्यति

नाथ आशीर्व्वादे प्रार्थने च आत्मनेपदी प्रार्थने द्विक० आशीर्व्वादे सक० सेट्।

कर्त्तरि नाथते। अनाथिष्ट। ननाथे। कर्म्मणि नाथ्यते अनाथि। णिचि नाथयति-ते अननाथत्-त।

कृत्सु नाथनीयम् । नाथनम् । नाथः । नाथकः । नाथी । नाथितः। नाथा । नाथितुम् । नाथितव्यम् नाथित्वा । संनाथ्य । नाथ्यम् । नाथमानः नाथ्यमानः। नाथिष्यमाणः। अस्य न णत्वम् प्रनाथते ।

निज शोधने जुहोत्यादि॰ उभयपदी सक॰ अनिट् ।

कर्त्तरि नेनेक्ति नेनिक्तः नेनिजति नेनेक्षि नेनिक्थः नेनिक्थ नेनेज्मि नेनिज्वः नेनिज्मः । नेनिक्ते नेनिजाते नेनिजते नेनिक्षे। नेनिज्यात् नेनिजीत। नेनेक्तु नेनिग्धि नेनिजानि । अनेनेक्-ग् अनेनिक्त। अनिजत्-अनैक्षीत्, अनिक्त। निनेज निनिजे । नेक्ता-सि-से । निज्यात् निक्षीष्ट । नेक्ष्य-ति-ते । कर्म्मणि निज्यते अनेजि । णिचि नेजयति-ते । अनीनिज-त्-त । सनि निनिक्ष-ति-ते । यङि नेनिज्यते । प्रादिभ्यो णत्वम् प्रणेनिक्ति ।

कृत्सु नेजनीयम् । नेजनम् । नेजः । नेजकः । नेजी । नेक्ता । निक्तः । निक्तिः । नेक्तुम् । नेक्तव्यम् । निक्त्वा । विनिज्य । नेज्यम् । नेनिजत् नेनिजानः । ने-क्ष्यन् क्ष्यमाणः ।

निन्द निन्दायां भ्वादिगणीयः पर॰ सकर्म्मकः सेट् ।

कर्त्तरि निन्दति । निन्देत् । निन्दतु । अनिन्दत् । अनिन्दीत् । निनिन्द निनिन्दतुः । निन्द्यात् । निन्दिष्यति । कर्म्मणि निन्द्यते । अनिन्दि । णिचि निन्दय-ति-ते । अनिनिन्द-त्-त ।

कृत्सु निन्दनीयम्। निन्दनम्। निन्दकः। निन्दी। निन्दिता। निन्दितः। निन्दा। निन्दितुम्। निन्दितव्यम्। निन्दित्वा। संनिन्द्य। निन्द्यम्। निन्दन् निन्द्यमानः। निन्दिष्यन् निन्दिष्यमाणः। प्रादिभ्यो णत्वम् प्रणिन्दति। कृत्सु पाणिनीयमते वा णत्वं प्रणिन्दा प्रनिन्दा मुग्धबोधमते तु सर्व्वत्र वा णत्वम्।

नी प्रापणे भ्वादिगणीयः उभयपदी द्विकर्म्मकः अनिट्।

कर्त्तरि नयति नयतः नयन्ति नयते। नयेत् नयेत। नयतु नयताम्। अनयत् अनयत। अनैषीत् अनेष्ट। निनाय निन्ये। नेता-सि-से। नीयात् नेषीष्ट। नेष्य-ति-ते। कर्म्मणि नीयते। अनायि। णिचि नाययति-ते। अनीनय-त्-त। सनि निनीषति-ते। यङि नेनीयते।

कृत्सु नयनीयम्। नयनम्। नयः। उपनयः विनयः। उन्नायः सन्नायः आनायः। नायकः। नायी। नेता। नीतः। नीतिः। नेतव्यम्। नीत्वा। विनीय। नेयम्। नयन् नयमानः नीयमानः। नेष्यन् नेष्यमाणः। कर्म्मणि नायिष्यमाणश्च। प्रादिभ्यो णत्वम् प्रणयति। प्रणयः।

प्र—करणे प्रणयति करोति। अप-दूरीकरणे अपनयति। उप-उपनयने आत्मनेपदम् उप-

नयते । उत्-उन्नयने ( उत्प्रेक्षायाम् ऊर्द्ध्वक्षेपणे च ) उन्नयति उत्प्रेक्षते ऊर्द्ध्वं क्षिपति वा अभि—अभिनये ( आकारादिना तदनुरूपकरणे ) अभिनयति । अनु-अनुनये (सन्तोषादिजनक व्यापारकरणे ) अनुनयति । वि—विनये आत्मनेपदी विनयते । वि-विगणने च ( ऋणशोधनार्थ गणनायाम् ) आत्मनेपदी ऋणं विनयते शोधनार्थं गणयतीत्यर्थः ।

नु स्तुतौ अदादि० परस्मैपदी सक० वेट् ।

कर्त्तरि नौति नुतः नुवन्ति नौषि नुथः नुथ नौमि । नुयात् । नौतु नवानि नवाव नवाम । अनौत् । अनावीत्-अनौषीत् । नुनाव नुनुविथ नुनुविव । नविता-नोता । नविष्यति-नोष्यति । कर्म्मणि नूयते । अनावि । णिचि नावय-ति-ते । अनूनव-त्-त । सनि नुनूषति । यङि नोनूयते । कृत्सु नवनीयम् । नवनम् । नवः अभिनवः । नावकः । नावी । नविता-नोता । नुतः । नुतिः । नवितुम् नोतुम् । नवितव्यम्-नोतव्यम् । नवित्वा-नुत्वा । संनुत्य । नव्यम् नाव्यम् । नुवन् नूयमानः । नविष्यन्-नोष्यन् । नविष्यमाणः, नोष्यमाणः कर्म्मणि नाविष्यमाणश्च । प्रादिभ्यो णत्वम् प्रणौति । प्रणवः ।

नुद प्रेरणे तुदादिगणीयः उभयपदी सकर्म्मकः अनिट् ।

कर्त्तरि नुद-ति-ते । नुदे-त्-त । नुद-तु ताम् । अनुद-त्-त । अनौत्सीत् अनुत्त । नुनोद नुनोदिथ नुनुदिव नुनुदे । नोत्ता-सि-से । नुद्यात् नुत्सीष्ट । नोत्स्य-ति-ते । कर्म्मणि नुद्यते । अनोदि । णिचि नोदय-ति-ते । अनूनुद-त्-त । सनि नुनुत्स-ति-ते । यङि नोनुद्यते ।

कृत्सु नोदनीयम् । नोदनम् । नोदः विनोदः । नोदकः । नोदी विनोदी । नुत्तः नुन्नः । नुत्तिः । नोत्तुम् । नोतव्यम् । नुत्त्वा । संनुद्य । नोद्यम् । नुद-न्, मानः नुद्यमानः । नोत्-स्यन्, स्यमानः । प्रादिभ्यो णत्वम् प्रणुदति । प्रणोदनम् । वि-विनोदे ( हर्षहेतुकव्यापारे ) सकर्म्मकः विनुदति । विनोदः । णिचि हर्षसम्पादने व्यापारे विनोदयति । अप-अपसारणे खण्डने च अपनुदति ।

नू स्तवने तुदादिगणीयः परस्मैपदी सकर्म्मकः सेट् ।

कर्त्तरि नुवति नुवतः नुवन्ति । नुवेत् । नुवतु । अनुवत् । अनुवीत् अनुविष्टाम् । नुनाव नुनुवतुः नुनुविथ । नुविता । नुविष्यति । कर्म्मणि नूयते । अनावि । णिचि नावय-ति-ते । अनूनव-त्-त । सनि नुनूषति । यङि नोनूयते ।

कृत्सु नुवनीयम् नुवनम्। नुवः। नावकः। नुविता। नूतः। नूतिः। नुवितुम्। नुवितव्यम्। नुवित्वा। संनूय। नूयं नाव्यम्। नुवन् नुवमानः नूयमानः। नुवि-ष्यन् ष्यमाणः। कर्म्मणि नाविष्यमाणश्च। प्रादिभ्यो णत्वम् प्रणुवति। प्रणूतः।

नृत नर्त्तने दिवादिगणीयः परस्मैपदी अकर्म्मकः सेट्।

कर्त्तरि नृत्यति नृत्यतः नृत्यन्ति। अनर्त्तीत्। ननर्त्त। नर्त्तिता। नृत्यात्। नर्त्तिष्यति नर्त्स्यति। भावे नृत्यते। अनर्त्ति। णिचि नर्त्तय-ति-ते। अनीनृतत् अननर्त्तत्। सनि निनर्त्तिषति निनृत्सति।

कृत्सु नर्त्तनीयम्। नर्त्तनम्। नर्त्तः। नर्त्तकः नर्त्तकी। नर्त्ती। नर्त्तिता। नृत्तः। नृत्तिः। नर्त्तितुम्। नर्त्तितव्यम्। नर्त्तित्वा। संनृत्य। नृत्यं नर्त्त्यम्। नृत्यन्। नर्त्तिष्यन् नर्त्स्यन्। प्रादिभ्यो न णत्वम् प्रनृत्यति।

पच पाके भ्वादिगणीयः उभयपदी सकर्म्मकः अनिट्।

कर्त्तरि पचति-ते। पचेत्-त। पच-तु-ताम्। अपच-त्-त। अपाक्षीत् अपक्त। पपाच। पेचतुः। पेचिथ-पपक्थ पेचिव पेचे। पक्ता-सि-से। पच्यात् पक्षीष्ट। पक्ष्य-ति-ते। कर्म्मणि पच्यते।

अपाचि । णिचि पाचय-ति-ते । अपीपच-त्-त । सनि पिपक्ष-ति-ते । यङि पापच्यते ।
कृत्सु पचनीयम् । पचनम् । पाकः । मितम्पचः द्रोणम्पचः । पचः । सुपचः दुष्पचः। पाचकः ।
इष्णुच् उत्पचिष्णुः । एलिम पचेलिमम् । पक्ता । क्त्रि, मप् च, पक्त्रिमः । पक्वः । पक्तिः । पचा ।
पक्तुम् । पक्तव्यम् । पक्त्वा । संपच्य । पाच्यम् । प्रच-न् मानः । पच्यमानः पक्ष्य-न् माणः ।

पञ्च व्यक्तीकारे भ्वादिगणीयः आत्मनेपदी सकर्म्मकः सेट् ।

कर्त्तरि पञ्चते । अपञ्चिष्ट । कर्म्मणि पञ्च्यते । अपञ्चि । णिचि पञ्चय-ति-ते । अपपञ्च-त्-त ।
कृत्सु पञ्चनीयम् । प्रपञ्चनम् । पञ्चः । पञ्चकः । पञ्चितम् । पञ्चितुम् । पङ्क्तिः । पञ्चितव्यम् ।
पञ्चिता । पञ्चमानः पञ्चिष्यमाणः ।

पञ्च विस्तारे चुरादिगणीयः उभयपदी सकर्म्मकः सेट् ।

कर्त्तरि पञ्चय-ति-ते । अपपञ्च-त्-त । कर्म्मणि पञ्च्यते । अपञ्चि ।
कृत्सु पञ्चयिता । पञ्चना । पञ्चयितुम् । पञ्चयितव्यम् । पञ्चयित्वा । प्रपञ्चय-न् मानः ।
प्रपञ्च्यमानः । पञ्चयि-ष्यन् ष्यमाणः इत्यादि भेदः अन्यत् भ्वादिगणीयवत् ।

पट भंशने चुरादिगणीयः उभयपदी सक० सेट्।

कर्त्तरि पाटय-ति-ते। अपीपट-त्-त। कर्म्मणि पाट्यते। अपाटि।

कृत्सु पाटनीयम् पाटनम्। पाटकः। पाटी। पाटयिता। पाटितः। पाटना। पाटयितुम्। पाटयितव्यम्। पाटयित्वा। संपाट्य। पाट्यम्। पाटय-न् मानः पाट्यमानः। पाटयि-ष्यन् ष्यमाणः। कर्म्मणि पाटिष्यमाणश्च। उत्-उत्पाटने (उन्मूलने) उत्पाटयति मूलादुत्थापयति।

पठ पठने भ्वादिगणीयः परस्मैपदी सक० सेट्।

कर्त्तरि पठति। अपाठीत्। पपाठ पेठतुः। कर्म्मणि पठ्यते। अपाठि। णिचि पाठय-ति-ते। अपीपठ-त्-त। सनि पिपठिषति। यङि पापठ्यते।

कृत्सु पठनीयम्। पठनम्। पाठः। पाठकः। पाठी। पठिता। पठितः। पठितिः। पठितुम्। पठित्वा। सम्पठ्य। पाठ्यम्। पठन्। पठ्यमानः। पठि-ष्यन् ष्यमाणः। ण्यन्तस्य पाठनीयम्। पाठनम्। पाठयिता। पाठितः। पाठना। पाठयितुम्। पाठयितव्यम्। पाठयित्वा। पाठय-न् मानः पाठ्यमानः। पाठयि-ष्यन् ष्यमाणः। इति भेदः। सनः पिपठिषा पिपठिषुः। पिपठिषन्। क्विपि पिपठीः।

पण व्यवहारे स्तुतौ च भ्वादिगणीयः आत्मनेपदी सेट् ।

कर्त्तरि पणायते पणायति । अपणायिष्ट । अपणिष्ट । पणायाम्-बभूव-आस-चक्रे पेणे । पणायितासे पणितासे । स्तुतौ सार्व्वधातुकेऽपि वा आयः पणते इत्यादि । कर्म्मणि पणाय्यते पण्यते । अपणायि-अपाणि ।

कृत्सु पणायनीयम्-पणनीयम् । पणायनम्-पणनम् । पणः । पणायकः-पाणकः । पणायिता-पणिता । पणायितः-पणितः । पणाया । पणायितुम् पणितुम् । पणायितव्यम्-पणितव्यम् । पणायित्वा-पणित्वा । सम्पणाय्य-सम्पण्य । पणाय्यम् पाण्यम् । पणायमानः स्तुतौ पणमानोऽपि पणायि-ष्यन् ष्यमाणः-पणिष्यमाणः ।

पत पतने भ्वादिगणीयः पर० अक० सेट् ।

कर्त्तरि पतति । अपप्तत् । पपात पेततुः । पतिता । पत्यात् । पतिष्यति । भावे पत्यते । अपाति । णिचि पातय-ति-ते । अपीपत-त्-त । सनि पिपतिषति-पित्सति । यङि पनीपत्यते ।

क्तीतृसु पतनयम् । पतनम् । पातः । पातकः। पाती । इष्णुच् उत्पतिष्णुः । उकञ् पातुकः । पतितः । पत्तिः । पतितुम् । पतितव्यम् । पतित्वा । सम्पत्य । पात्यम् । पतन् पतिष्यन् । ण्यन्तस्य पातनीयम् । पातनम् । पातयिता । पातितः । पातना । पातयितुम् । पातयितव्यम् । पातय-न् मानः पात्यमानः । पातयि-ष्यन् ष्यमाणः। कर्म्मणि पातिष्यमाणश्च । सनः पिपतिषा-पित्सा । पिपतिषुः-पित्सुः । पिपतिषन् पित्सन् ।

उत्—ऊर्द्ध्वपतने उत्पतति । प्रनि नमस्कारे सक० प्रणिपतति । अनु—अनुगमने अनुपतति ।

पद गतौ दिवादिगणीयः आत्मनेपदी सकर्म्मकः अनिट् ।

कर्त्तरि पद्यते । अपादि । पत्स्यते । कर्म्मणि पद्यते । अपादि । णिचि पादय-ति-ते अपीपद-त्-त । सनि पिपदिषते पित्सते । यङि पनीपद्यते । प्रणि-प्रणिपद्यते ।

कृत्सु पदनीयम् । पदनम् । पादः । पादी । पादकः । पन्नः । पत्तिः । पत्तुम् । पत्तव्यम् । पत्त्वा । प्रपद्य । पाद्यम् । पद्यमानः । पत्स्यमानः । ण्यन्तस्य पादनीयम् पादनम् । पादयिता । पादितः । पादना । पादयितुम् । पादयितव्यम् । पादयित्वा । पादय-न् मानः पाद्यमानः । पादयि-ष्यन् ष्यमाणः । कर्म्मणि पादिष्यमाणश्च । सनः

पिपदिषा पित्सा पिपदिषुः पित्सुः । पिपदिषमाणः-पित्समानः । यङि पनीपद्यमानः।

उत्—उद्भवे अक० उत्पद्यते । उदपादि । उत्पन्ना । उत्पत्तिः ।

सम्—सम्पत्तौ अक० सम्पद्यते । सम्पन्नः सम्पत्तिः-सम्पत् । वि—मरणे अक० विपद्यते । विपन्नः विपत्तिः विपत् । आ—आपत्तौ (आपत्प्राप्तौ, हठादागमने, तर्कविशेषे च) आपद्यते आपदं प्राप्नोति हठादागच्छति तर्कविषयीभवति । आपन्नः आपत्तिः-आपत् । प्रति-ज्ञाने, स्वीकारे, वा प्रतिपद्यते जानाति स्वीकरोति वा । उप—उपपत्तौ (युक्तियुक्तभवने) । उपपद्यते । उपपन्नः उपपत्तिः । णिचः उपपादयति । उपपाद्यते । उपपादनीयम् । उपपाद्यम् ।

अभि—उप-स्वीकारे अभ्युपपद्यते स्वीकरोति । अभ्युपपन्नः अभ्युपपत्तिः ।

पा पाने भ्वादिगणीयः सक० अनिट् ।

कर्त्तरि पिबति । पिबेत् । पिबतु । अपिबत् । अपात् । पपौ पपिथ-पपाथ पपिव । पाता । पेयात् । कर्मणि पीयते । अपायि अपायिषाताम्-आपासाताम् । पपे । पायिताहे पाताहे । णिचि पायय-ति-ते । अपीप्य-त्-त । पिपासति । यङि पेपीयते ।

कृत्सु पानीयम्। पानम्। पायः। पायकः। मधुपः द्विपः फेनपः। क्षीरपायी। पाता। पीतः। पीतिः। पातुम्। पातव्यम्। पीत्वा। आपाय। निपीयेति तु पीङोरूपम्। पेयम्। पिबन्। पीयमानः। पास्यन् पास्यमानः। सनः पिपासा। पिपासुः। पिपासन्।

पा रक्षणे अदादिगणीयः परस्मैपदी सक० अनिट्।

कर्त्तरि पाति। पायात्। पातु। अपात् अपान्-अपुः। अपासीत्। पपौ पपुः। कर्म्मणि पायते। अपायि। णिचि पालय-ति-ते। अपीपल-त्-त।

कृत्सु पिबतेरिव रूपम्। पातः। पातिः। पात्वा। पान् इत्यादि भेदः।

पार कर्म्मसमाप्तौ अदन्तचुरादिगणीयः उभयपदी सक० सेट्।

कर्त्तरि पारयति-ते। अपपारत्-त। कर्म्मणि पार्य्यते। अपारि।

कृत्सु पारणीयम्। पारणम्। पारः। पारकः। पारयिता। पारितः। पारणा। पारयितुम्। पारयितव्यः। पारयित्वा। सम्पार्य्य। पार्य्यम्। पारय-न् माणः पार्य्यमाणः। पारयि-ष्यन् ष्यमाणः। कर्म्मणि पारिष्यमाणश्च।

पाल रक्षणे चुरादिगणीयः उभयपदी सक० सेट्।

कर्त्तरि पालय-ति-ते। अपीपल-त्-त। पालयिता-सि-से। कर्म्मणि पाल्यते। अपालि।
कृत्सु पालनीयम्। पालनम्। पालः। अण् क्षेत्रपालः भूमिपालः भूपालः। पालकः। पालयिता।
पालितः। पालना। पालयितुम्। पालयितव्यम्। पालयित्वा। सम्पाल्य। पाल्यः।
पालय-न् मानः पाल्यमानः। पालयि-ष्यन् ष्यमाणः कर्म्मणि पालिष्यमाणश्च।

पिष पेषणे रुधादिगणीय: परस्मैपदी सक० अनिट्।

कर्त्तरि पिनष्टि पिंष्टः पिंषन्ति पिनक्षि पिंष्टः पिंष्ठ पिनष्मि पिंष्वः पिंष्मः। पिंष्यात्। पिनष्टु।
पिण्ड्ढि। अपिनट्-ड् अपिष्टाम्। अपिषत्। पिपेष। पिपेषिथ पिपेषिव। पेष्टा।
पिष्यात्। पेक्ष्यति। कर्म्मणि पिष्यते। अपेषि। णिचि पेषय-ति-ते। सनि पिपिक्षति।
कृत्सु पेषणीयम्। पेषणम्। पेषः। पेषकः। पेषी। पेष्टा। पिष्टः। पिष्टिः। पेष्टुम्। पेष्टव्यम्। पिष्ट्वा।
सम्पिष्य। णमुल् शुष्कपेषं पिनष्टि। पेष्यम्। पिंषन्। पिष्यमाणः। पे-क्ष्यन् क्ष्यमाणः।

पीड़ पीड़ने चुरादिगणीयः उभयपदी सक० सेट् ।

कर्त्तरि पीड़य-ति-ते । अपीपिड़-त्-त-अपिपीड़-त्-त । कर्म्मणि पीड्यते । कृत्सु पीड़नीयम् । पीड़नम् । पीड़ः । पीड़कः । पीड़ी । पीड़यिता । पीड़ितः । पीड़ा । णिजन्तस्य, पीड़ना । पीड़यितुम् । पीड़यितव्यम् । पीड़यित्वा । संपीड्य । पीड्यः । पीड़य-न्, मानः पीड्य-मानः । पीड़यि-ष्यन्, ष्यमाणः । पीड़िष्यमाणश्च । कर्म्मणि आ—भूषणे आपीड़यति । आपीड़ा ।

पुष पोषणे दिवादिगणीयः परस्मैपदी सक० अनिट् ।

कर्त्तरि पुष्यति । पुष्येत् । पुष्यतु । अपुष्यत् । अपुषत् । पुपोष । पुपोषिथ पुपुषिव । पोष्टा । पोक्ष्यते । कर्म्मणि पुष्यते । अपोषि । णिचि पोषयति-ते । अपूपुषत् । सनि पुपुक्षति ।
कृत्सु पोषणीयम् । पोषणम् । पोषः । पोषकः । पोषी । पोष्टा । पुष्टः । पुष्टिः । पोष्टुम् । पोष्टव्यम् । पुष्ट्वा । सम्पुष्य । पोष्यम् । पुष्यन् । पुष्यमाणः । पो-क्ष्यन्, क्ष्यमाणः ।

पुष पोषणे क्र्यादिगणीयः परस्मैपदी सकर्म्मकः सेट्।

कर्त्तरि पुष्णाति। पुष्णीतः। पुष्णन्ति। पुष्णीयात्। पुष्णातु। अपुष्णात्। अपोषीत्। पोषिता। पोषिष्यति। कर्म्मणि पुष्यते। अपोषि। णिचि पोषय-ति-ते। अपूपुष-त्-त।

कृत्सु दिवादिगणीयवत् पोषिता। पोषितुम्। पोषितव्यम्। पोषित्वा। पुष्णन्। इत्यादि भेदः।

पुष्प विकाशे दिवादिगणीयः परस्मैपदी अक० सेट्।

कर्त्तरि पुष्प्यति। अपुष्पीत्। भावे। पुष्प्यते। अपुष्पि। णिचि पुष्पय-ति-ते।

कृत्सु पुष्पणीयम्। पुष्पणम्। घञ् पुष्पम्। पुष्पिता। पुष्पितः। पुष्पा। पुष्पितुम्। पुष्पितव्यम्। पुष्पित्वा। सम्पुष्प्य। पुष्प्यन्। पुष्पिष्यन्।

पू शोधने भ्वादिगणीयः आत्मनेपदी सक० सेट्।

कर्त्तरि पवते। अपावीत्। कर्म्मणि पूयते। अपावि। णिचि पावय-ति-ते। अपीपव-त्-त। सनि पुपूषते। णिचः सनि पिपावयिषति।

कृत्सु पवनीयम्। पवनम्। ल्यु पवनः। पावकः। पविता। पूतः-पवितः। पूतिः। पवि-

तुम् । पवितव्यम् । पवित्वा पूत्वा । सम्पूय । विपूय: पव्यम् पाव्यम् । पवमानः पूयमानः । 
पवि-ष्यन् ष्यमाणः । कर्म्मणि पाविष्यमाणश्च ।

पू शोधे दिवादिगणीयः आत्मनेपदी अक० सेट् ।

कर्त्तरि पूयते । अपविष्ट । पुपुवे । भावे पूयते । अपावि । इतरत्तु भ्वादिगणीयवत् । पूयमान इति भेदः ।

पू शोधने क्र्यादिगणीयः उभयपदी सक० सार्व्वधातुके ह्रस्वः सेट् ।

कर्त्तरि पुनाति पुनीतः पुनन्ति पुनीते । पुनीयात् पुनीत । पुनातु पुनीताम् । अपुनात् अपुनीत । अपावीत् अपविष्ट । पुपाव पुपुवे । पवितासि-से । पूयात् पविषीष्ट । पविष्य-ति-ते । अन्यत् भ्वादिगणीयवत् । निष्ठायां नाशेऽर्थे पूनः अन्यत्र पूतः । इत्र पवित्रम् । शतरि पुनन् पुनानः इत्यत भेदः ।

पूज पूजने चुरादिगणीयः उभयपदी सक० सेट्।

कर्त्तरि पूजय-ति-ते। अपुपूज-त्-त। कर्म्मणि पूज्यते। अपूजि अपूजयिषाताम्-अपूजिषाताम्। कृत्सु पूजनीयम्। पूजनम्। पूजकः। पूजी। पूजयिता। पूजितः। पूजा। पुनर्ण्यन्तस्य पूजना। पूजयितुम् पूजयितव्यम्। पूजयित्वा। सम्पूज्य। पूज्यः। पूजय-न्-मानः पूज्यमानः। पूजयि-ष्यन् ष्यमाणः। कर्म्मणि पूजिष्यमाणश्च।

पूर पूर्त्तौ दिवादिगणीयः आत्मनेपदी सक० सेट्।

कर्त्तरि पूर्य्यते। अपूरि-अपूरिष्ट। पुपूरे। पूरिता। कर्म्मणि पूर्य्यते। अपूरि। णिचि पूरय-ति-ते। अपूपुर-त्-त।

कृत्सु पूरणीयम्। पूरणम्। पूरः। पूरकः। पूरी। पूरिता। पूर्णः पूर्त्तं खातादि। पूर्त्तिः। पूरितुम्। पूरितव्यम्। पूरित्वा। सम्पूर्य्य। पूर्य्यम्। पूर्य्यमाणः। पूरिष्यमाणः।

पूर पूर्त्तौ चुरादिगणीयः उभयपदी सक० सेट्।

कर्त्तरि पूरयति-ते। अपूपुरत्-त। पूरयिता। कर्म्मणि पूर्य्यते। अपूरि। अपूरिषाताम् अपूरयिषाताम्।

कृत्सु पूरयिता । पूर्णः-पूरितः । पूरणा । पूरयितुम् । पूरयितव्यम् । पूरयित्वा । पूरय-न् मानः । पूरयि-ष्यन् ष्यमाणः इत्यादि भेदः । अन्यत् दिवादिगणीयवत् ।

पॄ पूरणे जुहोत्यादि॰ सक॰ परस्मैपदी अनिट् वा दीर्घः दीर्घपक्षे सेट् ।

कर्त्तरि पिपर्त्ति पिपृतः-पिपूर्त्तः पिप्रति-पिपुरति पिपर्षि पिपृथः-पिपूर्थः पिपर्मि पिपृवः-पिपूर्वः । पिपृयात् पिपूर्य्यात् । पिपर्तु पिपृताम्-पिपूर्त्ताम् । पिपृहि पिपूर्हि पिपराणि पिपराव । अपिपः अपिपृताम्-अपिपूर्त्ताम् अपिपरुः । अपारीत् अपार्षीत् । पपार पपरतुः-पप्रतुः । परीता परिता पर्त्ता । प्रियात् पीर्य्यात् । परिषीष्ट पृषीष्ट । परीष्यति परिष्यति । कर्म्मणि प्रियते पूर्य्यते । अपारि । पारितासे परीतासे परितासे पर्त्तासे । णिचि पारयति-ते । सनि पिपरीषति पिपरिषति पुपूर्षति ।

कृत्सु परणीयम् परणम् । परः पारः । पारकः । पारी । परीता परिता पर्त्ता । पूर्त्तः पृतः । पूर्त्तिः पृतिः । परीतुम् परितुम् पर्त्तुम् । परीतव्यम् परितव्यम् पर्त्तव्यम् । पीर्त्वा पृत्वा । आपूर्य्य आपृत्य । पार्य्यम् पृत्यम् । पिपुरत् पिप्रत् । पूर्य्यमाणः प्रियमाणः । परीष्य-न् परिष्यन् परीष्यमाणः परिष्यमाणः । कर्म्मणि पारिष्यमाणश्च ।

पृ व्यापारे तुदादिगणीयः आत्मनेपदी सकर्म्मकः अनिट्। प्रायेण व्यापूर्व्वः।

कर्त्तरि व्याप्रियते। व्याप्रियेत। व्याप्रियताम्। व्याप्रियत। व्यापृत। व्यापप्रे। व्यापृषीष्ट। व्यापरिष्यते। कर्म्मणि व्याप्रियते। व्यापारि। णिचि व्यापारय-ति-ते। व्यापीपर-त्-त। कृत्सु व्यापरणीयम्। व्यापरणम्। व्यापारः। व्यापारकः। व्यापारी। व्यापर्त्ता। व्यापृतः। व्यापृतिः। व्यापर्तुम्। व्यापर्त्तव्यम्। व्यापृत्य। व्यापार्य्यः। व्याप्रियमाणः। व्यापरिष्यमाणः। कर्म्मणि व्यापारिष्यमाणश्च।

पृ प्रीतौ स्वादिगणीयः परस्मैपदी अक० प्रीणने सक० अनिट्।

कर्त्तरि पृणोति पृणुतः पृण्वन्ति। पृणुयात्। पृणोतु। अपृणात्। अपार्षीत्। पपार पप्रतुः। पर्त्ता। प्रियात्। परिष्यति। कर्म्मणि प्रियते। अपारि अपारिषातम्-अपृषाताम्। णिचि पारयति-ते अपीपरत्-त। सनि पुपूर्षति। कृत्सु पृत्वम् इति भेदः अन्यत् तुदादिगणीयवत्।

पृच सम्पर्के रुधादिगणीयः पर० अक० सेट्।

कर्त्तरि पृणक्ति पृक्तः पृञ्चन्ति पृणक्षि पृक्थः पृक्थ पृणच्मि पृञ्च्वः पृञ्च्मः। पृञ्च्यात्। पृणक्तु। पृङ्ग्धि। अपृणक्-ग्। अपर्चीत्। पपर्च। पर्चिता। भावे पृच्यते। अपर्चि।

क्तत्सु पर्चनीयम् । पर्चनम् । पर्कः। घिनुन् सम्पर्की । पर्चिता । पृक्तः। पृक्तिः। पर्चितुम् । पर्चितव्यम् । पर्चित्वा । संपृच्य । पर्क्यम् । पृञ्चन् । पर्चिष्यन् । क्विप् पृक् ।

पेस गतौ भ्वादिगणीयः परस्मैपदी सक० सेट् ।

कर्त्तरि पेसति । अपेसीत् । कर्म्मणि पेस्यते । अपेसि । णिचि पेसयति-ते । अपिपेसत्-त ।
क्तत्सु पेसनीयम् । पेसनम् । पेसः । पेसकः । पेसी । पेसिता । पेसितः । पेसा । पेसितुम् । पेसितव्यम् । पेसित्वा । सम्पेस्य । पेस्यम् । पेसन् पेस्यमानः । पेसि-ष्यन् ष्यमाणः ।

पेस अनादरे चुरादिगणीयः उभयपदी सक० सेट् ।

कर्त्तरि पेपसयति-ते । अपीपिसत्-त । क्तत्सु पेसयिता । पेसयितुम् । पेसयितव्यम् । पेसयित्वा । पेसयन् मानः । पेसयिष्यन् ष्यमाणः इत्यादि भेदः अन्यत् भ्वादिगणीयवत् ।

प्याय वृद्धौ भ्वादिगणीयः आत्मनेपदी अक० सेट् ।

कर्त्तरि प्यायते । अप्यायि-अप्यायिष्ट । पिप्ये । भावे । प्याय्यते । अप्यायि । यङि पेपीयते ।

कृत्सु प्यायनीयम् प्यायनम्। प्यायः। प्यायकः। प्यायी। प्यायिता। प्यानः। आपीनमूधः।
प्यातिः। प्यायितुम्। प्यायितव्यम्। प्यायित्वा। संप्याय्य। प्याय्यम्। प्यायमानः। प्यायिष्यमाणः।
यङि पेपीयमानः। आ-णिच् प्रीणने आप्याययति-ते। आप्यायितः। आप्यायय-न् मानः।

प्रच्छ जिज्ञासायां तुदादिगणीयः द्विक० पर० अनिट्।

कर्त्तरि पृच्छति। पृच्छेत्। पृच्छतु। अपृच्छत्। अप्राक्षीत्। पप्रच्छ पप्रच्छतुः। प्रष्टा। पृच्छ्यात्।
प्रक्ष्यति। कर्म्मणि। पृच्छ्यते। अप्रच्छि। णिचि प्रच्छयति-ते। सनि पिपृच्छिषति।
कृत्सु प्रच्छनीयम्। प्रच्छनम्। प्रच्छः। प्रच्छकः। प्रच्छी। प्रष्टा। पृष्टः। पृष्टिः। प्रष्टुम्।
क्विप् प्राट् न प्रश्नः। प्रष्टव्यम्। पृष्ट्वा। आपृच्छ्य। प्रच्छ्यम्। पृ-च्छन् च्छ्यमानः। प्रक्ष्य-न्
माणः। आ—आत्मनेपदं आपृच्छते। आपृष्टः।

प्रथ ख्यातौ भ्वादिगणीयः आत्मनेपदी अकर्म्मकः ख्यापने सकर्म्मकः सेट्।

कर्त्तरि प्रथते। अप्रथिष्ट। पप्रथे। भावे प्रथ्यते। अप्राथि। णिचि प्रथय-ति-ते। अपप्रथ-त्-त।
कर्म्मणि अप्राथि-अप्रथि।

क्तत्_ड प्रथनीयम्। प्रथनम्। प्राथः। प्राथकः। प्राथी। प्रथिता। प्रथितः। प्रथा। प्रथितुम्। प्रथितव्यम्। प्रथित्वा। संप्रथ्य। प्राथ्यम्। प्रथमानः। प्रथ्यमानः। प्रथिष्यमाणः।

प्री प्रीतौ दिवादिगणीयः आत्मनेपदी अकर्म्मकः प्रीणने सक० अनिट्।

कर्त्तरि प्रीयते। प्रीयेत। प्रीयताम्। अप्रीयत। अप्रेष्ट। पिप्रिये। प्रेताहे। प्रेषीष्ट। प्रेष्यते। भावे प्रीयते। अप्रायि। णिचि प्रीणय-ति-ते। अपिप्रीण-त्-त।

क्तत्_ड प्रयणीयम्। प्रयणम्। प्रायः। प्रायी। प्रेता। प्रीतः। प्रीतिः। प्रेतुम्। प्रेतव्यम्। प्रीत्वा। सम्प्रीय। प्रेयम्। प्रीयमाणः प्रेष्यमाणः।

प्री इच्छायां क्र्यादिगणीयः उभयपदी सकर्म्मकः अनिट्।

कर्त्तरि प्रीणाति प्रीणीतः प्रीणन्ति प्रीणीते प्रीणाते। प्रीणयात् प्रीणीत। प्रीणातु प्रीणीताम्। अप्रीणात् अप्रीणीत। अप्रैषीत् अप्रेष्ट। पिप्राय पिप्रियतुः पिप्रिये। प्रेता-सि-से। प्रीयात् प्रेषीष्ट। प्रेष्यति-ते। कर्म्मणि प्रीयते। अप्रायि। णिचि प्रायय-ति-ते। अपिप्रय-त्-त।

क्तत्_ड दिवादिगणीयवत्। प्रीणन्, प्रीणान इत्यादि भेदः।

प्रु गमने भ्वादिगणीयः आत्मनेपदी सकर्म्मकः अनिट्।

कर्त्तरि प्रवते। अप्रोष्ट। पुप्रुवे। प्रोतासे प्रोष्यते। कर्म्मणि प्रूयते। अप्रावि। णिचि प्रावय-ति-ते। अपिप्रवत्-त-अपुप्रवत्-त।

कृत्सु प्रवणीयम्। प्रवणम्। प्रावः। प्रावकः। प्रावी। प्रोता। प्रुतः। प्रुतिः। प्रतुम्। प्रुत्वा। सम्प्रुत्य। प्रव्यम्। प्रवमाणः प्रूयमाणः। प्रोष्यमाणः। कर्म्मणि प्राविष्यमाणश्च।

प्रुष दाहे भ्वादिगणीयः परस्मैपदी सकर्म्मकः सेट्।

कर्त्तरि प्रोषति। अप्रोषीत्। पुप्रोष। कर्म्मणि प्रुष्यते। अप्रोषि। णिचि प्रोषय-ति-ते। अपुप्रुष-त्-त।

कृत्सु प्रोषणीयम् प्रोषणम्। प्रोषः। प्रोषकः। प्रोषी। प्रोषिता। प्रुष्टः। प्रुष्टिः। प्रोषितुम्। प्रोषितव्यम्। प्रोषित्वा। प्रुष्ट्वा। संप्रुष्य। प्रोष्यः। प्रोषन्। प्रुष्यमाणः। प्रोषि-ष्यन् ष्यमाणः।

प्लव प्लवने भ्वादिगणीयः आत्मनेपदी अकर्म्मकः सेट्।

कर्त्तरि प्लवते। अप्लविष्ट। भावे प्लव्यते। अप्लावि। णिचि प्लावय-ति-ते। अपिप्लव-त्-त।

कृत्सु स्रवणीयम् । स्रवणम् । ण्यन्तस्य स्रावणम् । स्रवः। विस्रवः-विस्रावः । आस्रवः-आस्रावः । स्रावकः । 
स्रविता । स्रवितः । स्रवितुम् । स्रवितव्यम् । स्रवित्वा । संस्रव्य । स्राव्यम् । स्रवमाणः स्रविष्यमाणः ।

प्रुष-दाहे भ्वादिगणीयः आत्म० सक० सेट् । प्रुषद्वत्कार्य्यम् ।

प्सा भक्षणे अदादिगणीयः परस्मैपदी सक० अनिट् ।

कर्त्तरि प्साति । प्सातः । प्सायात् । प्सातु । अप्सात् अप्सुः-अप्सान् । अप्सासीत् अप्सासिष्टाम् अप्सासिषुः । पप्सौ । प्सायात्-प्सेयात् । कर्म्मणि प्सायते । अप्सायि । णिचि प्सापयति अपिप्सपत् । कृत्सु प्सानीयम् । प्सानम् । प्सायः । प्सायकः । प्सायी । प्साता । प्सातः । प्सातिः । प्सातुम् । प्सातव्यम् । प्सात्वा । संप्साय । प्सेयम् । प्सान् प्सायमानः । प्सा-स्यन् स्यमानः । कर्म्मणि प्सायिष्यमाणश्च । प्रणिप्साति । प्रणिप्सा ।

फल गतौ निष्पत्तौ च भ्वादिगणीयः पर० सक० सेट् ।

कर्त्तरि फलति । अफालीत् । पफाल फेलतुः । कर्म्मणि फल्यते । अफालि । णिचि फालय-ति-ते । गत्यर्थस्य तु फलयति । उभययोः अपीफल-त्-त ।

कृत्सु फलनीयम् फलनम् । अच् फलम् । फालः । फालकः । फलिता । फुल्लः फुल्लवान् । प्रफुल्तः संफुल्तः । भावे फुल्तम् । क्रियारम्भे । फुल्तः । फुल्तिः । फलितुम् । फलितव्यम् । फलित्वा । संफल्य । फलन् फल्यमानः । फलिष्यन् ष्यमाणः ।

फुल्ल विकाशे भ्वादिगणीयः पर० अक० सेट् ।

कर्त्तरि फुल्लति । अफुल्लीत् । पुफुल्ल । फुल्लिता । भावे फुल्लयते । अफुल्लि । फुल्लयति-ते । अपुफुल्लत् । कृत्सु फुल्लनीयम् । फुल्लनम् । फुल्लः । उत्फुल्लः संफुल्लः प्रफुल्लः । फुल्लकः । फुल्लितः । फुल्लिः । फुल्लितुम् । फुल्लितव्यम् । संफुल्ल्य । फुल्लम् । फुल्लन् फुल्लिष्यन् ।

बध निन्दायां भ्वादिगणीयः आत्मनेपदी सक० सेट् ।

कर्त्तरि बीभत्सते । बीभत्सेत । बीभत्सताम् । अबीभत्सत । अबीभत्सिष्ट । बीभत्साम्-बभूव-आस-चक्रे । बीभत्सितासे । बीभत्सिषीष्ट । बीभत्सिष्यते । अबीभत्सिष्यत । कर्म्मणि बीभत्स्यते । अबीभत्सि । णिचि बीभत्सयति-ते । अबीभत्सत्-त ।

कृत्सु बीभत्सनीयम् । बीभत्सनम् । बीभत्सकः । बीभत्सिता । बीभत्सितः । बीभत्सा ।

बीभत्सुः । बीभत्सितुम् । बीभत्सितव्यम् । बीभत्सित्वा । आबीभत्स्य । बीभत्सम् । बीभत्समानः बीभत्स्यमानः बीभत्सिष्यमाणः। निन्दाभिन्नार्थे तु बधते । अबधिष्ट । बबधे इत्यादि।

बन्ध बन्धने क्र्यादिगणीयः पर० सक० अनिट् ।

कर्त्तरि बध्नाति बध्नीत बध्नन्ति । बध्नीयात् । बध्नातु बधान । अबध्नात् । अबान्त्सीत् अबान्धाम् अबान्त्सुः । बबन्ध बबधतुः बबन्धतुः । कर्म्मणि बध्यते । अबन्धि । णिचि बन्धयति-ते । अबबन्धत्-त । सनि बिबन्त्सति ।

कृत्सु बन्धनीयम् । बन्धनम् । बन्धः प्रबन्धः । बन्धकः । बन्धी । बन्धा । बद्धः । बद्धिः । बन्धुम् । बन्धव्यम् । बद्धा । आबध्य । बन्धरः । बध्नन् बध्यमानः । बन्त्-स्यन् स्यमानः ।

अनु—अनुबन्धने अनुबध्नाति । सम्—संबन्धे संबध्नाति । उत्—उद्बन्धने उद्बध्नाति । प्रति—प्रतिबन्धे प्रतिबध्नाति । नि—निबन्धे निबध्नाति । निर्—निर्बन्धे निर्बध्नाति । प्रप्रबन्धे प्रबध्नाति ।

बाध विघाते भ्वादिगणीयः आत्मनेपदी सक० सेट् ।

कर्त्तरि बाधते । अबाधिष्ट । बबाधे । कर्म्मणि बाध्यते । अबाधि । णिचि बाधयति-ते अबबाधत्-त । कृत्सु बाधनीयम् । बाधनम् । बाधः । बाधकः । बाधिता । बाधितः । बाधा । बाधितुम् ।

बाधितव्यम्। बाधित्वा। अपबाध्य। बाध्यः। बाधमानः बाध्यमानः। बाधिष्यमाणः।
सम्—संबाधने (अन्योन्योत्पीड़ने) संबाधते। संबाधः।

बुध ज्ञाने दिवादिगणीयः आत्मनेपदी सकर्म्मकः अनिट्।

कर्त्तरि बुध्यते। अबोधि-अबुद्ध अभुद्ध्वम्। बुबुधे। बोद्धासे। भुत्सीष्ट। भोत्स्यते। कर्म्मणि बुध्यते। णिचि बोधय-ति-ते। अबूबुध-त्-त। सनि बुभुत्सते। यङि बोबुध्यते।

कृत्सु बोधनीयम्। बोधनम्। बोधः। बोधकः। बोधी। बोद्धा। बुद्धः। बुद्धिः। बोद्धुम्। बोद्धव्यम्। बुद्ध्वा। संबुध्य। बोध्यः। बुध्यमानः। भुत्स्यमानः। णिचः बोधयिता। बोधितः। बोधना। बोधयितुम्। बोधयितव्यः। बोधयित्वा। प्रबोध्य। बोधय-न् मानः बोध्यमानः बोधयिष्यन् माणः। सनः बुभुत्सा। बुभुत्सुः। बुभुत्सन्।

उत्—उद्बोधे (उत्प्रेक्षायाम्) उद्बुध्यते। उत्-बोधि उद्बोधने (उत्तेजने) उद्बोधयति उत्तेजयति।
सम्-बोधि संबोधने (क्रियासु नियोगार्थमाभिमुख्यसम्पादने) संबोधयति। संबोधितः।

बुध बोधने भ्वादिगणीयः परस्मैपदी सकर्म्मकः अनिट्।

कर्त्तरि बोधति। अभौत्सीत्। बुबोध बुबोधिथ बुबोधिव। अन्यत् दिवादिगणीयवत् घ्नतरि बोधन् इति भेदः।

बृ बरणे ( प्रार्थने ) क्र्यादिगणीयः परस्मैपदी सक० सेट् ।

कर्त्तरि वृणाति-वॄणाति वृणीतः-वॄणीतः वृणन्ति-वॄणन्ति । अवारीत् । ववार वव्रतुः । वरीता-वरिता । वीर्यात् । वरीष्यति-वरिष्यति । कर्म्मणि वीर्य्यते । अवारि । णिचि वारय-ति-ते । अवीवर-त्-त । सनि विवरीषति विवरिषति वुवूर्षति ।

कृत्सु वरणीयम् । वरणम् । वरः । वारकः । वरीता वरिता । वीर्णः । वॄर्णः । वरीतुम् वरितुम् । वरितव्यः वरीतव्यः । वीर्त्वा । संवीर्य्य । वार्य्यः । वृणन् वॄणन् । वीर्य्यमाणः । वरी-ष्यन् ष्यमाणः वरि-ष्यन् ष्यमाणः ।

ब्रू कथने दिवादिगणीयः उभयपदी द्विक० सेट् ।

कर्त्तरि ब्रवीति-आह ब्रूतः-आहतुः ब्रुवन्ति-आहुः ब्रवीषि-आत्थ ब्रूथः-आहथुः ब्रूथ ब्रवीमि ब्रूवः ब्रूमः । ब्रूते ब्रुवाते ब्रुवते । ब्रूयात् ब्रुवीत । ब्रवीतु ब्रूताम् । अब्रवीत् अब्रूत । अवोचत् अवोचत । उवाच ऊचतुः उवचिथ उवक्थ ऊचिव । वक्तासि । उच्यात् वक्ष्यति । कर्म्मणि उच्यते । अवाचि । ऊचे ऊचिषे । वक्तासे । वक्षीष्ट । वक्ष्यते । णिचि वाचय-ति-ते । अवीवच-त्-त । सनि विवक्षति ।

कृत्सु वचनीयम् । वचनम् । वाकः अनुवाकः । वाचकः। वक्ता । उक्तः । उक्तिः । वक्तुम् । वक्तव्यम् । उक्त्वा । प्रोच्य । वाच्यम् । पदसमुदाये वाक्यम् । ब्रुवन् ब्रुवाणः । उच्यमानः क्वसौ ऊचिवान् । काने अनूचानः। वक्ष्यमाणः। णिचः वाचयिता । वाचितः । वाचना । वाचयितुम् । वाचयित्वा । संवाच्य । वाचय-न् मानः वाच्यमानः । वाचयि-ष्यन् ष्यमाणः। कर्म्मणि वाचिष्यमाणश्च । सनः विवक्षा । विवक्षुः। विवक्षन् ।

भक्ष भक्षणे चुरादिगणीयः उभयपदी सक० सेट् ।

कर्त्तरि भक्षयति-ते । अबभक्षत्-त । भक्षयिता-सि-से । भक्ष्यात् भक्षयिषीष्ट । कर्म्मणि भक्ष्यते। अभक्षि ।

कृत्सु भक्षणीयम् । भक्षणम् । भक्षः । भक्षकः । भक्षयिता । भक्षितः । भक्षणा । भक्षयितुम् । भक्षयितव्यम् । भक्षयित्वा । आभक्ष्य । भक्ष्यः । भक्षय-न् माणः भक्ष्यमाणः। भक्षयि-ष्यन् ष्यमाणः । कर्म्मणि भक्षिष्यमाणश्च ।

भज भागे सेवने च भ्वादिगणीयः उभयपदी सक० अनिट् ।

कर्त्तरि भजति-ते । अभाक्षीत् अभक्त । बभाज भेजतुः भेजिथ-बभक्थ भेजे । भक्तासि-से ।

भज्यात् भक्षीष्ट । कर्म्मणि भज्यते । अभाजि । णिचि भाजय-ति-ते । अबीभज-त्-त ।
सनि बिभक्ष-ति-ते ।

कृत्सु भजनीयम् । भजनम् । भागः । भाजकः । घिनुन् भागी । भक्ता । भक्तः । भक्तिः । भक्तुम् ।
भक्तव्यः । भक्त्वा । विभज्य । भाज्यम् । भाग्यम् । भजन् भजमानः भज्यमानः । भक्ष्यन् भक्ष्यमाणः ।

भण शब्दे भ्वादिगणीयः द्विक० सेट् ।

कर्त्तरि भणति । अभाणीत् अभणीत् । बभाण बभणतुः । कर्म्मणि भण्यते । अभाणि । णिचि भाणयति-ते । अबभाण-त्-त अबीभण-त्-त ।

कृत्सु भणनीयम् । भणनम् । भाणः । भाणकः आभाणकः । भणिता । भणितः । भणितिः । भणितुम् । भणितव्यम् । भणित्वा । सम्भण्य । भाण्यम् । भणन् भण्यमानः । भणि-ष्यन् ष्यमाणः ।

भन्ज भञ्जने रुधादिगणीयः पर० सक० अनिट् ।

कर्त्तरि भनक्ति भङ्क्तः भञ्जन्ति भनक्षि भङ्क्थः भङ्क्थ भनज्मि भञ्ज्वः भञ्ज्मः । भञ्ज्यात् ।

भनक्तु भङ्ग्धि भनजानि । अभनक्-ग् । अभाङ्क्षीत् अभाङ्क्ताम् । बभञ्ज बभञ्जतुः-बभजतुः- बभञ्जिथबभङ्क्थ । भङ्क्ता । भज्यात् । कर्म्मणि भज्यते । अभाजि उपसर्गात्तु प्राभञ्जि । अभङ्क्षाताम् । णिचि भञ्जयति-ते । अबभञ्ज-त्-त । सनि बिभङ्क्षति ।

कृत्सु भञ्जनीयम् । भञ्जनम् । भङ्गः । भञ्जकः । प्रभञ्जनः । घुरच् भङ्गुरः । भङ्क्ता । भग्नः । भक्तिः । भङ्क्तुम् । भङ्क्तव्यम् । भक्त्वा । प्रभज्य । भङ्ग्यम् । भञ्जन् । भङ्क्ष्यन् भज्यमानः । भङ्क्ष्यन् भङ्क्ष्यमाणः ।

भर्त्स भर्त्सने चुरादिगणीयः उभयपदी पाणिनीयमते आत्म० सक० सेट् ।

कर्त्तरि भर्त्सयति-ते । अबभर्त्सत्-त । कर्म्मणि भर्त्स्यते । अभर्त्सि ।

कृत्सु भर्त्सनीयम् । भर्त्सनम् । भर्त्सः । भर्त्सकः । भर्त्सयिता । भर्त्सितः । भर्त्सना । भर्त्सयितुम् । भर्त्सयितव्यम् । भर्त्सयित्वा । संभर्त्स्य । भर्त्स्यम् । भर्त्सयन् मानः भर्त्स्यमानः । भर्त्सयि-ष्यन् ष्यमाणः । कर्म्मणि भर्त्सिष्यमाणश्च ।

भा दीप्तौ अदादिगणीयः पर० अक० अनिट् ।

कर्त्तरि भाति भातः भान्ति । अभात् अभान् अभुः। अभासीत् । बभौ बभिथ बभाथ बभिव । भातासि । भावे । भायते । अभायि । णिचि भापयति-ते । अबीभपत्-त । सनि बिभासति ।

कृत्सु भानीयम् । भानम् । भायः । भायकः । भाता । भातः। भातिः । प्रभा आभा । भातुम् । भातव्यम् । भात्वा । विभाय । भेयम् । भान् भास्वन् ।

व्यति—परस्परभाने व्यतिभाते व्यतिभाते व्यतिभाते व्यतिभासे व्यतिहे । प्रति—प्रतिभायाम् प्रतिभाति ।

भाष कथने भ्वादिगणीयः आत्मनेपदी द्विक० सेट् ।

कर्त्तरि भाषते । अभाषिष्ट । बभाषे । भाषितासे । कर्म्मणि भाष्यते । अभाषि । णिचि भाषयति-ते । अबभाषत्-त अबीभषत्-त ।

कृत्सु भाषणीयम् । भाषणम् । भाषः । भाषकः । भाषी । भाषिता । भाषितः । भाषा । भाषि-

तुम् । भाषितव्यम् । भाषित्वा । संभाष्य । भाष्यम् । भाषमाणः भाष्यमाणः । भाषिष्यमाणः ।
सम्—सम्भाषणे ( परस्परकथने ) सम्भाषते । वि—विकल्पे विभाषते । कर्म्मणि विभाष्यते ।

भास दीप्तौ भ्वादिगणीयः आत्मनेपदी अक० सेट् ।

सर्व्वं भाषवत् षकारस्थाने सकारमात्रभेदः । णिचि अबभासत्-त इति, भासनीयमित्यादौ णत्वनिमित्तहेत्वभावान्न णत्वमिति, घुरच् भासुरः । वर भास्वरः इति च भेदः ।

भिक्ष याचने भ्वादिगणीयः आत्मनेपदी द्विक० सेट् ।

कर्त्तरि भिक्षते । भिक्षेत । भिक्षताम् । अभिक्षत । अभिक्षिष्ट । बिभिक्षे । कर्म्मणि भिक्ष्यते । अभिक्षि । णिचि भिक्षयति-ते । अबिभिक्षत्-त । सनि बिभिक्षिषते । यङि बेभिक्ष्यते ।
कृत्सु भिक्षणीयम् । भिक्षणम् । भिक्षः । दुर्भिक्षम् सुभिक्षम् । भिक्षकः । षाक-भीक्षाकः भीक्षाकी । भिक्षी । उ भिक्षुः । भिक्षिता । भिक्षितः । भिक्षा । भिक्षितुम् । भिक्षितव्यम् । भिक्षित्वा । संभिक्ष्य । भिक्ष्यम् । भिक्षमाणः भिक्ष्यमाणः । भिक्षिष्यमाणः ।

भी भये जुहोत्यादि० पर० अक० अनिट् ।

कर्त्तरि बिभेति बिभीतः-बिभितः बिभ्यति बिभीथः-बिभिथः, बिभेमि बिभीवः-बिभिवः । बिभियात्-बिभीयात् । बिभेतु बिभिहि-बिभीहि बिभयानि । अबिभेत् अबिभीताम्-अबिभिताम् अबिभयुः । अभैषीत् । बिभयाम्-बभूव-आस-चकार बिभाय । आमभावपक्षे बिभ्यतुः बिभ्युः बिभयिथ-बिभेथ बिभ्यिव । भेता । भेष्यति । भावे भीयते । अभायि । णिचि प्रयोजकात् भये आत्मनेपदी भीषयते । अन्यत्र उभयपदी भापयति-ते । सनि बिभीषति । यङि बेभीयते ।

कृत्सु भयनीयम् । भयनम् । भयम् । भायकः । आनक-भयानकः। भेता । भीतः । भीतिः । भेतुम् । भेतव्यम् । सम्भीय । भेयम् । क्रु भीरुः। क्लुक भीलुकः । म भीमः। णिचः। भीष्मः। बिभ्यत्। भेष्यन् । णिचः भीषणीयम् भापनीयम् । भीषणम् भापनम् । भीषणः भापनः । भीषकः भापकः। भीषयिता भापयिता । भीषितः भापितः । भीषणा भापना । भीषयितुम् भापयितुम् । भीषयितव्यम् भापयितव्यम् । भीषयित्वा भापयित्वा । सम्भीष्य सम्भाप्य । भीष्यम् भाप्यम् । भीषयमाणः भीष्यमाणः । भापय-न् मानः भाप्यमानः । भीषयिष्यमाणः भापयि-ष्यन् ष्यमाणः । सनः बिभीषा बिभीषुः । बिभीषन् ।

भुज वक्रीकरणे तुदादिगणीयः परस्मैपदी सकर्म्मकः अनिट् ।

कर्त्तरि भुजति । अभौक्षीत् । बुभोज । भोक्ता । कर्म्मणि भुज्यते । अभोजि । णिचि भोजयति-ते । अबूभुजत्-त । सनि बुभुक्षति । यङि बोभुज्यते ।

कृत्सु भोजनीयम् । भोजनम् । भोजकः । भोजी । भोक्ता । भुग्नः । भुक्तिः । भोक्तुम् । भोक्तव्यम् । भुक्त्वा । संभुज्य । भोज्यम् । भुजन् भुज्यमानः । भो-क्ष्यन् क्ष्यमाणः ।

भुज भक्षे पालने च रुधादिगणीयः भक्षे आत्मने० पालने पर० सक० अनिट् ।

कर्त्तरि भुनक्ति भुङ्क्तः भुञ्जन्ति भुनक्षि भुङ्क्थः भुङ्क्थ भुनज्मि भुञ्ज्वः भुञ्ज्मः भुङ्क्ते भुञ्जाते भुञ्जते भुङ्क्षे भुञ्जाथे भुङ्ग्ध्वे भुञ्जे भुञ्ज्वहे भुञ्ज्महे । भुञ्ज्यात् भुञ्जीत । भुनक्तु भुङ्क्ताम् । अभुनक्-ग् अभुङ्क्त । अभौक्षीत् अभुक्त । बुभोज बुभोजिथ बुभुजे । भोक्ता-सि-से । भुज्यात् भुक्षीष्ट । भोक्ष्यति ते । कर्म्मणि भुज्यते अभोजि । णिचि भक्षणार्थकस्य पर० भोजयति। पालनार्थस्य उभय० भोजयति ते । अबूभुजत् त । सनि बुभुक्षते । पालनार्थस्य बुभुक्षति ।

कृत्सु तुदादिगणीयवत् भुक्तः भूर्भोग्या अन्नं भोज्यम् । भुञ्जन् भुञ्जान इत्यादि भेदः ।

भूष भूषणे वा चुरादि० उभयपदी पक्षे भ्वादि० परस्मैपदी सक० सेट्।

कर्त्तरि भूषय-ति-ते भूषति। अबुभूषत्-त अभूषीत्। कर्म्मणि भूष्यते। अभूषि अभूषयिषाताम् अभूषिषाताम्। सनि बुभूषयिषति-ते बुभूषिषति।

कृत्सु भूषणीयम्। भूषणम्। भूषकः। भूषणः। भूषी। भूषयिता भूषिता। भूषितः। भूषणा भूषा। भूषयितुम् भूषितुम्। भूषयितव्यम् भूषितव्यम्। भूषयित्वा भूषित्वा। सम्भूष्य। भूष्यम्। भूषयन् मानः भूषन् भूष्यमाणः। भूषयिष्यन् ष्यमाणः कर्म्मणि भूषिष्यमाणश्च। भूषिष्यन् ष्यमाणः।

भृ भरणे पोषणे च जुहोत्यादि० परस्मैपदी सकर्म्मकः अनिट्।

कर्त्तरि बिभर्त्ति बिभृतः बिभ्रति बिभर्षि बिभृथः बिभृथ बिभर्म्मि बिभृवः बिभृमः। बिभृयात्। बिभर्त्तु बिभृताम् बिभ्रतु बिभृहि बिभराणि। अबिभः अबिभृताम् अबिभरुः। अभार्षीत्। बिभराम्-बभूव-आस-चकार बभार। आमभावपक्षे बभ्रतुः बभर्थ। भर्त्ता। भ्रियात्। भरिष्यति। कर्म्मणि भ्रियते। अभारि अभारिषाताम् अभृषाताम्। णिचि भारयति ते। अबीभरत् त। सनि बुभूर्षति।

कृत्सु भरणीयम्। भरणम्। भरः। भारः। भारकः। भारी। भर्त्ता। भृतः।

भृतिः। भर्त्तुम्। भर्त्तव्यम्। भृत्वा। अवभृत्य। भार्य्यम्। बिभ्रत् सामर्थ्य कवचं बिभ्राणः। भ्रियमाणः। भरिष्यन् ष्यमाणः। कर्म्मणि भारिष्यमाणश्च।

भृ भरणे पोषणे च भ्वादिगणीयः उभयपदी सक॰ अनिट्।

कर्त्तरि भरति ते। बभार बभ्रे। सनि बिभरिषति ते बुभूर्षति ते अन्यत् जुहोत्यादिगणीयवत् लिमा-थु प्रत्यययोः भरिमः भरथुः। शतृशानचोः भरन् भरमाण इति भेदः।

भ्रन्श भ्रंशने ( अधःपतने ) दिवादिगणीयः अक॰ आत्म॰ सेट्।

कर्त्तरि भ्रश्यते। लुङि परस्मैपदी च अभ्रशत् अभ्रांशीत् अभ्रंशिष्ट। बभ्रंशे। भ्रंशिताहे। भ्रंशिषीष्ट। भ्रंशिष्यते। भावे। भ्रश्यते। अभ्रंशि। णिचि भ्रंशयति ते। अबभ्रंशत् त। सनि बिभ्रंशिषते। कृत्सु भ्रंशनीयम्। भ्रंशनम्। भ्रंशः। भ्रंशकः। भ्रंशी। भ्रंशिता। भ्रष्टः। भ्रष्टिः। भ्रंशितुम्। भ्रंशितव्यम्। भ्रंशित्वा भ्रष्ट्वा। सम्भ्रश्य। भ्रंश्यः। भ्रश्यमानः। भ्रंशिष्यमाणः।

भ्रन्श भ्रंशे भ्वादिगणीयः आत्मनेपदी अक॰ सेट्।

कर्त्तरि भ्रंशते। लुङि परस्मैपदञ्च अभ्रशत्। अभ्रंशिष्ट। अन्यत् दिवादिगणीयवत् शानचि भ्रंशमान इति भेदः।

भ्रम भ्रमणे भ्वादिगणीयः पर० अक० सेट् ।

कर्त्तरि भ्रमति । अभ्रमत्-अभ्रमीत् । बभ्राम बभ्रमतुः । भावे भ्रम्यते । णिचि भ्रमयति ते । अबभ्रमत् त । सनि बिभ्रमिषति । यङि बम्भ्रम्यते ।

कृत्सु भ्रमणीयम् । भ्रमणम् । भ्रमः । भ्रमकः । भ्रमी । भ्रमिता । भ्रान्तः । भ्रान्तिः । भ्रमितुम् । भ्रमितव्यम् । भ्रमित्वा भ्रान्त्वा । विभ्रम्य । भ्रम्यम् । भ्रमन् । यङः बम्भ्रम्यमाणः । भ्रमिष्यन् ।

भ्रम भ्रमणे दिवादिगणीयः परस्मैपदी अकर्म्मकः सेट् ।

कर्त्तरि भ्राम्यति । भ्राम्येत् । भ्राम्यतु । अभ्राम्यत् । आर्द्धधातुके कृत्सु च भ्वादिगणीयवत् । शतरि भ्राम्यन् क्त्वा—भ्रमित्वा क्त भ्रमितः इत्यादि भेदः ।

भ्रम भ्रमणे भ्वादिगणीयः उभयपदी अक० अनिट् फणादिः ज्वलादिश्च ।

कर्त्तरि भ्रमति भ्रमते । भ्रमतु अभ्रमीत् । भ्रेमतुः बभ्रमतुः णिचि भ्रमयति भ्रामयति । अन्यत् भ्वादिगणीयवत् शतरि भ्रमन् शानचि भ्रममाण इति भेदः ।

भ्रस्ज पाके ( भर्ज्जने ) तुदा० उभयपदी सक० अनिट् ।

कर्त्तरि भृज्जति ते । अभ्राक्षीत् अभ्रष्ट । बभर्ज्ज बभ्रज्ज बभर्ज्जतुः बभ्रज्जतुः बभर्ज्जिथ-बभ्रज्जिथ-

बभ्रष्ठ बभर्ज्जिव बभ्रज्जिव। बभर्जे बभ्रज्जे। भर्ज्जिता-सि-से भ्रष्टासि से। भ्रज्ज्यात् भर्ज्यात् भर्ज्जिषीष्ट भ्रक्षीष्ट। भर्ज्जिष्य ति-ते भ्रक्ष्यति ते। कर्म्मणि भ्रज्ज्यते। अभ्रज्जि। णिचि भर्ज्जयति ते। भ्रज्जयति ते। सनि बिभर्जिष-ति-ते बिभ्रज्जिष-ति-ते बिभ्रक्षति ते।

कृत्सु भर्जनीयम् भ्रज्जनीयम्। भर्जनम् भ्रज्जनम्। भर्जः भ्रज्जः। भर्जकः भ्रज्जकः। भर्जिता भ्रष्टा। भर्जितः भ्रष्टः। भर्जा भृष्टिः। भर्जितुम् भ्रष्टुम्। भर्जितव्यम् भ्रष्टव्यम्। भर्जित्वा भृष्ट्वा। आभर्ज्य आभृज्य। भर्ज्यम् भ्रज्यम्। भृज्जन् मानः भृज्ज्यमानः भर्जिष्य-न् माणः भ्रक्ष्य-न् माणः।

भ्राज दीप्तौ भ्वादिगणीयः आत्मने० अक० सेट्।

कर्त्तरि भ्राजते। अभ्राजिष्ट। बभ्राजे भ्रेजे। भ्राजितासे। भावे भ्राज्यते। अभ्राजि। णिचि भ्राजयति ते। अबिभ्रजत् त अबभ्राजत् त।

कृत्सु भ्राजनीयम्। भ्राजनम्। भ्राजः। भ्राजकः। भ्राजी। भ्राजिता। भ्राजितः। भ्राजा। भ्राजितुम्। भ्राजितव्यम्। भ्राजित्वा। विभ्राज्य। भ्राज्यम्। क्विप् विभ्राट् अथु भ्राजथुः। भ्राजमानः भ्राजिष्यमाणः। इष्णुच् भ्राजिष्णुः।

मण्ड भूषणे वा चुरादिगणीयः उभयपदी पक्षे भ्वादि० पर० सक० सेट्।

कर्त्तरि मण्डयति ते। मण्डति। अममण्डत् त। अमण्डीत्। कर्म्मणि मण्ड्यते। अमण्डि।

कृत्सु मण्डनीयम्। मण्डनम्। मण्डः। मण्डनः। मण्डकः। मण्डी। मण्डयिता मण्डिता। मण्डितः। मण्डना मण्डा। मण्डयितुम् मण्डितुम्। मण्डयितव्यम् मण्डितव्यम्। मण्डयित्वा मण्डित्वा। संमण्ड्य। मण्ड्यम्। मण्डयन् मानः मण्डन् मण्ड्यमानः। मण्डयिष्यन् ष्यमाणः। मण्डिष्यन् ष्यमाणः।

मथ क्लेशे भ्वादि० परस्मैपदी क्लेशे अकर्म्मकः क्लेशने सकर्म्मकः अनिट्।

कर्त्तरि मथति। अमथीत्। मेथतुः। भावे कर्म्मणि च मथ्यते। अमाथि। णिचि मथयति ते। अमीमथत्-त।

कृत्सु मथनीयम्। मथनम्। मथः। माथः। माथकः। प्रमाथी। मथिता। मथितः। मन्तिः। मथितुम्। मथितव्यम्। मथित्वा। संमथ्य। माथ्यम्। मथन् मथ्यमानः। मथिष्यन् ष्यमाणः।

मद हर्षे दिवादिगणीयः परस्मैपदी अक० सेट्।

कर्त्तरि माद्यति। माद्येत्। माद्यतु। अमाद्यत्। अमदत् अमादीत् अमदीत्। ममाद मेदतुः।
भावे मद्यते। अमादि। णिचि मदयति-ते। अमीमदत्-त। सनि मिमदिषति। यङि मामद्यते।
कृत्सु मदनीयम्। मदनम्। मदनः। णिचः मदनः। मादकः। मादी। मदिता। मत्तः। मत्तिः।
मदितुम्। मदितव्यम्। मदित्वा। संमद्य। माद्यः। माद्यन् मदिष्यन्।
उत्—उन्मादे उन्माद्यति। उन्मादः। उन्मत्तः। प्र—प्रमादे प्रमाद्यति। प्रमादः। प्रमत्तः।

मद हर्षे चुरादिगणीयः आत्मनेपदी अक० सेट्।

कर्त्तरि मादयते। अमीमदत। कर्म्मणि माद्यते। मादयिताहे मादिताहे।
कृत्सु मादनीयम्। मादनम्। मादः। मादकः। मादी। मादयिता। मादितः। मादना।
मादयितुम्। मादयितव्यम्। मादयित्वा। संमाद्य। माद्यम्। मादयमानः। मादयिष्यमाणः।

मन बोधे दिवादिगणीयः आत्मनेपदी सकर्म्मकः अनिट्।

कर्त्तरि मन्यते। अमंस्त। मेने। मन्तासे। कर्म्मणि मन्यते अमानि। णिचि मानयति ते। अमीमनत् त।

कृत्सु मननीयम्। मननम्। मानः अभिमानः। मानकः। मानी। मन्ता। मंतः। मतिः। मन्तुम्। मन्तव्यम्। मत्वा। विमत्य विमन्य। मान्यम्। मन्यमानः मंस्यमानः।

अभि—अभिमाने अभिमन्यते। अभिमानः। सम्—सम्मतौ सम्माने (गौरवान्वितक्रियायाम्) सम्मन्यते सम्मानः। अप—अव-अपमाने। अप—अव—मन्यते अपमानः अवमानः अनु—अनुमतौ अनुमन्यते अनुमतिः। वि—विमतौ विमन्यते विमतिः।

मन बोधे तुदादिगणीयः आत्मनेपदी सक० सेट्।

कर्त्तरि मनुते मन्वाते मन्वते। मन्वीत। मनुताम्। अमनुत। अमनिष्ट। मेने। मनितासे। मनिष्यते। कर्म्मणि मन्यते। अमानि। णिचि मानयति ते अमीमनत्-त।

कृत्सु मनिता। मनितुम्। मनितव्यम्। मनित्वा मत्वा। मन्वानः मनिष्यमाणः इति भेदः। अन्यत् दिवादिगणीयवत्।

मन्त्र् मन्त्रणे (गुप्तभाषणे) चुरादिगणीयः आत्मनेपदी सकर्म्म० सेट्।

कर्त्तरि मन्त्रयते। अममन्त्रत। मन्त्रयिताहे। कर्म्मणि मन्त्र्यते। अमन्त्रि।

ल्तृषु मन्त्रणीयम्। मन्त्रणम्। मन्त्रः। मन्त्रकः। मन्त्रयिता। मन्त्रितः। मन्त्रणा। मन्त्रयितुम्। मन्त्रयितव्यम्। मन्त्रयित्वा। संमन्त्र्य। मन्त्र्यम्। मन्त्रयमाणः मन्त्र्यमाणः। मन्त्रयिष्यमाणः। कर्म्मणि मन्त्रिष्यमाणश्च।

आ—आमन्त्रणे (यस्याः करणे प्रत्यवायो नास्ति तादृशक्रियायां नियोगे) सम्बोधने च आमन्त्रयते। नि—निमन्त्रणे (अवश्यकर्त्तव्यक्रियायां नियोगकरणे) सम्बोधने च निमन्त्रयते। अभि-अभिमन्त्रणे। (मन्त्रपाठेन संस्कारकरणे) अभिमन्त्रयते अभिमन्त्र्य।

मन्थ विलोडने भ्वादिगणीयः परस्मैपदी सकर्म्मकः सेट्।

कर्त्तरि मन्थति। अमन्थीत्। ममन्थ ममथतुः ममन्थतुः। मथ्यात्। कर्म्मणि मथ्यते अमन्थि। णिचि मन्थय-ति-ते। अममन्थत्-त।

ल्तृषु मन्थनीयम्। मन्थनम्। मन्थनः। मन्थः। मन्थकः। मन्थी। मन्थिता। मथितः। मन्था। मन्थितुम्। मन्थितव्यम्। मन्थित्वा मथित्वा। प्रमथ्य। मन्थाम्। मन्थन् मथ्यमानः मन्थिष्यन् मन्थिष्यमाणः।

मन्थ क्लेशने क्र्यादिगणीय: परस्मैपदी सकर्म्मक: सेट्।

कर्त्तरि मथ्नाति मथ्नीत: मथ्नन्ति। मथ्नीयात्। मथ्नातु। अमथ्नात्। अन्यत् भ्वादिगणीयवत् शतरि मथ्नन् इति विशेष:।

मस्ज मज्जने (सशिरस्कस्नाने) तुदादिगणीय: परस्मैपदी अकर्म्मक: अनिट्।

कर्त्तरि मज्जति। अमाङ्क्षीत् अमांक्ताम् अमाङ्क्षु: अमाङ्क्षी: अमांक्तम् अमाङ्क्षम् अमाङ्क्ष्व। ममज्ज। मंक्तासि। मज्ज्यात्। मङ्क्ष्यति। भावे मज्ज्यते। अमज्जि। णिचि मज्जय-ति-ते। अममज्जत्-त। सनि मिमङ्क्षति।

कृत्सु मज्जनीयम् मज्जनम्। मज्ज:। मज्जक:। मज्जी। मंक्ता। मग्न:। मंक्ति:। मंक्तुम्। मंक्तव्यम्। मंक्त्वा। संमज्ज्य। मज्जम्। मज्जन्। मङ्क्ष्यन्। अथ मज्जथु:। सन: मिमङ्क्षा। मिमङ्क्षु:। मिमङ्क्षन्।

नि—निमज्जने (अत्यन्तासक्तौ अत्यन्तसंश्लेषे च) निमज्जति। उत्—उन्मज्जने (उत्प्लवने) उन्मज्जति। उत्तिष्ठति।

मह पूजने भ्वादिगणीयः परस्मैपदी सकर्म्मकः सेट् ।

कर्त्तरि महति । अमहीत् । ममाह मेहतुः । कर्म्मणि मह्यते । अमाहि । णिचि माहयति ते ।
कृत्सु महनीयम् । महनम् । असि महः । माहः । माहकः । माही । महितः । माढ़िः ।
महितुम् । महितव्यम् । महित्वा । संमह्य । माह्यः । महान् मह्यमानः । महिष्यन् ष्यमाणः ।

मा माने अदादिगणीयः परस्मैपदी सकर्म्मकः अनिट् ।

कर्त्तरि माति । अमात् अमान् अमुः । अमासीत् । ममौ ममतुः ममिथ-ममाथ । मेयात् ।
मास्यति । कर्म्मणि मीयते । अमायि अमायिषाताम् अमासाताम् । णिचि मापय-ति-ते ।
अमीमपत्-त । सनि मित्सति । यङि मेमीयते ।

कृत्सु मानीयम् । मानम् । मायकः । मायी । माता । मितः मितिः । मातुम् । मातव्यम् । मित्वा ।
संमाय । मेयः । मान् मीयमानः । मास्यन् स्यमानः । कर्म्मणि मायिष्यमाणश्च ।
प्र—प्रमाणे प्रमाति प्रमाणम् । परि—परिमाणे । परिमाति परिमाणम् । उत्—उन्माने उन्माति ।
वि—विमाने विमाति ।

मान विचारणे भ्वादिगणीयः आत्मनेपदी सकर्म्मकः सेट्।

कर्त्तरि मीमांसते। अमीमांसिष्ट। मीमांसाम्-बभूव-आस-चक्रे। कर्म्मणि मीमांस्यते। अमीमांसि।
क्तत्सु मीमांसनीयम्। मीमांसनम्। मीमांसः। मीमांसकः। मीमांसी। मीमांसिता। मीमांसितः।
मीमांसा। मीमांसुः। मीमांसितुम्। मीमांसितव्यम्। मीमांसित्वा। संमीमांस्य। मीमांस्यम्।
मीमांसमानः मीमांस्यमानः। मीमांसिष्यमाणः।

मान पूजने वा चुरादिगणीयः उभयपदी पक्षे भ्वादिगणीयः पर० सक० सेट्।

कर्त्तरि मानयति-ते मानति। अमीमनत्-त अमानीत्। कर्म्मणि मान्यते। अमानि।
क्तत्सु माननीयम्। माननम्। मानः। मानकः। मानी। मानयिता मानिता। मानितः।
मानना माना। मानयितुम् मानितुम्। मानयितव्यम् मानितव्यम्। मानयित्वा मानित्वा।
संमान्य। मान्यः। मानयन् मानः मानन् मान्यमानः। मानयिष्यन् ष्यमाणः। मानिष्यन्।
कर्म्मणि मानिष्यमाणश्च।

मार्ग अन्वेषणे वा चुरादिगणीयः उभयपदी पक्षे भ्वादिगणीयः पर० सक० सेट्।

कर्त्तरि मार्गयति ते। मार्गति। अममार्गत् त अमार्गीत्। कर्म्मणि मार्ग्यते। अमार्गि। क्तत्सु मार्गणीयम्। मार्गणम्। मार्गणः। मार्गकः। मार्गी। मार्गयिता मार्गिता। मार्गितः। मार्गणा मार्गा॥ मार्गयितुम् मार्गितुम्। मार्गयितव्यम् मार्गितव्यम्। मार्गयित्वा मार्गित्वा। संमार्ग्य। मार्ग्यम्। मार्गय-न् माणः मार्गन् मार्ग्यमाणः। मार्गयिष्यन् ष्यमाणः मार्गिष्यन् ष्यमाणः। कर्म्मणि मार्गिष्यमाणश्च।

मार्ज मार्जने चुरादिगणीयः उभयपदी सकर्म्मकः सेट्।

कर्त्तरि मार्जयति ते। अममार्जत् त। कर्म्मणि मार्ज्यते। अमार्जि अमार्जयिषाताम्। अमार्जिषाताम्।

क्तत्सु मार्जनीयम्। मार्जनम्। मार्जः। मार्जकः। मार्जी। मार्जयिता। मार्जितः। मार्जना। मार्जयितुम्। मार्जयितव्यम्। मार्जयित्वा। संमार्ज्य। मार्ज्यम्। मार्जयन् मानः मार्ज्यमानः। मार्जयिष्यन्, ष्यमाणः। कर्म्मणि मार्जिष्यमाणश्च।

मि क्षेपणे स्वादिगणीयः उभयपदी सकर्म्मकः अनिट् ।

कर्त्तरि मिनोति मिनुतः मिन्वन्ति । मिनोमि मिन्वः मिनुवः मिन्मः मिनुमः मिनुते मिन्वाते मिन्वते । मिनुयात् मिन्वीत । मिनोतु मिनु मिनवानि । मिनुताम् मिनवै । अमिनोत् अमिनुताम् अमिन्वन् अमिनोः अमिनवम् अमिनुत । अमासीत् । मिमाय मिम्यतुः मिमिथ मिमाथ मिम्यिव मिम्ये । माता । मीयात् । मासीष्ट । मास्यति-ते । कर्म्मणि मीयते । अमायि । अमायिषाताम् अमासाताम् । णिचि मापयति ते अमीमपत् त । सनि मित्स-ति-ते ।

कृत्सु मानीयम् । मानम् । मायः । मायकः मायी । माता । मितः । मितिः । मातुम् । मातव्यम् । मित्वा । संमाय । मेयम् । मिन्वन् मिन्वानः मास्यन् स्यमानः कर्म्मणि मायिष्यमाणश्च ।

अनु – अनुमितौ अनुमिनोति अनुमानम् । उप – उपमाने उपमिनोति उपमितिः उपमानम् ।

प्र – प्रमाणे प्रमिणोति प्रमितः । प्रमितिः । प्रमाणम् ।

मिद स्नेहे दिवादिगणीयः पर० अकर्म्मकः सेट् ।

कर्त्तरि मेद्यति । अमिदत् अमेदीत् । मिमेद । मेदिता । भावे मिद्यते अमेदि । णिचि मेदयति ते । अमीमिदत् त ।

कृत्सु मेदनीयम्। मेदनम्। असि मेदः। मेदः। मेदकः मेदी। मेदिता। मेदितं मिदितं मिन्नम्। मित्तिः। मेद्यम्। मेदिष्यन्।

मिल संश्लेषे तुदादिगणीयः उभयपदी अकर्म्मकः सेट्।

कर्त्तरि मिलति-ते। अमेलीत् अमेलिष्ट। भावे मिल्यते अमेलि। णिचि मेलयति ते अमीमिलत् त।
कृत्सु मेलनीयम्। मेलनम्। मेलकः मेली। मेलिता। मिलितः। मेलितुम्। मेलितव्यम्। मिलित्वा संमिल्य। मेल्यम्। मिलन् मिलमानः मेलिष्यन्।

मिश्र युतौ योजने च अदन्तचुरादिगणीयः उभयपदी सकर्म्मकः सेट्।

कर्त्तरि मिश्रयति ते। अमिमिश्रत् त। कर्म्मणि मिश्र्यते अमिश्रि।
कृत्सु मिश्रणीयम्। मिश्रणम्। मिश्रः। मिश्रकः। मिश्री। मिश्रयिता। मिश्रितः। मिश्रणा। मिश्रयितुम्। मिश्रयितव्यम्। मिश्रयित्वा। संमिश्र्य। मिश्र्यम्। मिश्रयन् माणः मिश्र्यमाणः। मिश्रयिष्यन् ष्यमाणः। कर्म्मणि मिश्रिष्यमाणश्च।

मिष स्पर्द्धायाम् तुदादिगणीयः परस्मैपदी अक० सेट्।

कर्त्तरि मिषति। अमेषीत्। भावे मिष्यते। अमेषि। णिचि मेषयति ते अमीमिषत् त।

कृत्सु मेषणीयम् मेषणम् । मेषः । मेषकः मेषी । मेषिता । मिषितः । मिष्टिः । मेषितुम् । मेषितव्यम् । मेषित्वा । संमिष्य । मेष्यम् ॥ मिषन् मेषिष्यन् । उत्-उन्मेषे (प्रकाशे) उन्मिषति । नि—निमेषे निमिषति ।

मिह सेचने भ्वादिगणीयः परं० सक० अनिट् ।

कर्त्तरि मेहति । अमिक्षत् । मेढ़ा । मेक्ष्यति । कर्म्मणि मिह्यते । अमेहि । णिचि मेहयति ते अमीमिहत् त । सनि मिमिक्षति ।

कृत्सु मेहनीयम् मेहनम् । मेहः । मेहकः मेही । मेढ़ा । मीढ़ः । मीढ़िः । मेढुम् । मेढव्यम् । मेहन् मिह्यमानः मेक्ष्यन् ।

मील निमेषणे भ्वादिगणीयः पर० अक० सेट् ।

कर्त्तरि मीलति । अमीलीत् । णिचि मीलयति अमिमीलत् त अमीमिलत् त ।

कृत्सु मीलनीयम् । मीलनम् । मीलः । मीलकः । मीलिता । मीलितः । मीला प्रमीला । मीलयितुम् । मीलितव्यम् । मीलित्वा । संमील्य । मील्यम् । मीलन् मीलिष्यन् । प्र-प्रमीलायाम् । प्रमीलति । नि-निमीलने निमीलति । उत्-उन्मीलने उन्मीलति ।

मुच मोचने तुदादिगणीयः उभयपदी सकर्म्मकः अनिट् ।

कर्त्तरि मुञ्चति मुञ्चतः मुञ्चन्ति मुञ्चते । मुञ्चेत् मुञ्चेत । मुञ्चतु मुञ्चताम् । अमुञ्चत् अमुञ्चत । अमुचत् अमुक्त । मुमोच मुमोचिथ मुमुचे । मोक्तासि से । मुच्यात् मुक्षीष्ट । मोक्ष्यति ते । कर्म्मणि मुच्यते । अमोचि । णिचि मोचयति ते अमूमुचत् त । सनि मोक्षति ते । मुमुक्षति ते । यङि मोमुच्यते ।

कृत्सु मोचनीयम् । मोचनम् । मोकः निर्मोकः । मोचकः । मोची । मोक्ता । मुक्तः । मुक्तिः । मोक्तुम् । मोक्तव्यः । मुक्त्वा । विमुच्य । मोच्यः । मुञ्च-न् मानः मुच्यमानः । मोक्ष्य-न् माणः । आ—परिधाने आमुञ्चति परिधत्ते । वि—त्यागे विमुञ्चति त्यजति ।

मुद हर्षे भ्वादिगणीयः आत्मनेपदी अकर्म्मकः सेट् ।

कर्त्तरि मोदते । मोदेत । मोदताम् । अमोदत । आमोदिष्ट । मुमुदे । मोदितासे । मोदिषीष्ट । मोदिष्यते । भावे मुद्यते अमोदि । णिचि मोदयति ते अमूमुदत् त ।

कृत्सु मोदनीयम् । आमोदनम् । मोदनः । मोदकः । मोदिता । मुदितः । क्विप् मु-त् द् । मोदितुम् । मोदितव्यम् । मोदित्वा । संमुद्य । मोद्यम् । मोदमानः । मोदिष्यमाणः ।

मुर्च्छ मोहे हृद्धौ च भ्वादिगणीयः परस्मैपदी अकर्म्मकः सेट्।

कर्त्तरि मूर्च्छति। अमूर्च्छीत्। भावे मूर्च्छ्यते। णिचि मूर्च्छयति ते अमुमूर्च्छत् त।
कृत्सु मूर्च्छनीयम्। मूर्च्छनम्। मूर्च्छकः। मूर्च्छिता। मूर्च्छितः। भावादिकर्म्मणोस्तु मूर्च्छितम् मूर्त्तम्।
मूर्त्तिः। मूर्च्छा। मूर्च्छितुम्। मूर्च्छितव्यम्। मूर्च्छित्वा। संमूर्च्छ्य। मूर्च्छन्। मूर्च्छिष्यन्। क्विप् मूः।
सम्—संमूर्च्छने ( प्रतिविम्बने ) संमूर्च्छति दर्पणे प्रतिविम्बति।

मुष लुण्ठने क्र्यादिगणीयः परस्मैपदी द्विकर्म्मकः सेट्।

कर्त्तरि मुष्णाति मुष्णीतः मुष्णन्ति। मुष्णीयात्। मुष्णातु मुषाण। अमुष्णात्। अमोषीत्।
मुमोष। मोषिता। मुष्यात्। मोषिष्यति। कर्म्मणि मुष्यते। अमोषि। णिचि मोषयति ते।
अमूमुषत् त।
कृत्सु मोषणीयम्। मोषणम्। मोषः। मोषकः। मोषी। मोषिता। मुषितः। मुष्टिः। मु-ट्ड्।
मोषितुम्। मोषितव्यम्। मुषित्वा। संमुष्य। मुष्णन्। मुष्यमाणः। मोषि-ष्यन् ष्यमाणः।

मुह विमोहे दिवादिगणीयः परस्मैपदी अकर्म्मकः वेट्।

कर्त्तरि मुह्यति। मुह्येत्। मुह्यतु। अमुह्यत्। असुहत्। मुमोह मुमोहिथ-मुमोग्ध मुमोढ। मुमुहिव-मुमुह्व। मोहिता-मोग्धा-मोढा। मुह्यात्। मोहिष्यति-मोक्ष्यति। भावे मुह्यते। अमोहि। णिचि मोहयति ते। अमूमुहत् त।

क्तत्सु मोहनीयम्। मोहनम्। मोहः। मोहकः। मोही। मोहिता-मोग्धा-मोढा। मुग्धः मूढः। मुग्धिः मूढिः। मोहितुम्-मोग्धुम्-मोढुम्। मोहितव्यम् मोग्धव्यम् मोढ़व्यम्। मोहित्वा मुग्ध्वा मूढ्वा। मोह्यम्। मुह्यन्। मोहिष्यन् मोक्ष्यन्।

मृ मरणे तुदा० अक० अनिट् लुङि,ग्रे, आशीर्लिङि च आत्म० अन्यत्र परस्मैपदी।

कर्त्तरि म्रियते। अमृत। ममार। मर्त्तासि। मृषीष्ट। मरिष्यति। भावे म्रियते। अमारि। मर्त्त। णिचि मारयति ते अमीमरत् त। सनि मुमूर्षते।

क्तत्सु मरणीयम्। मरणम्। मरः। मारी। मर्त्ता। मृतः। मृतिः। मर्त्तुम्। मर्त्तव्यम्। मृत्वा। अपमृत्य। मार्य्यम्। म्रियमाणः। मरिष्यन्। णिचः मारकः। मारः। सनः मुमूर्षा। मुमूर्षुः। मुमूर्षमाणः।

मृग अन्वेषणे अदन्तचुरादिगणीयः आत्मनेपदी सकर्म्मकः सेट्।

कर्त्तरि मृगयते। अममृगत। कर्म्मणि मृग्यते। अमृगि अमृगयिषाताम् अमृगिषाताम्।
मृगतृम् मृगणीयम्। मृगणम्। मृगः। मृगकः। मृगयिता। मृगितः। मृगणा। मृगयितुम्। मृग-
यितव्यम्। मृगयित्वा। संमृग्य। मृग्यम्। मृगयमाणः मृग्यमाणः। मृगयिष्यमाणः कर्म्मणि
मृगिष्यमाणश्च।

मृज शोधने अदादिगणीयः परस्मैपदी सकर्म्मकः वेट्।

कर्त्तरि मार्ष्टि मृष्टः मार्ज्जन्ति-मृजन्ति मार्क्षि मृष्ठः मृष्ठ मार्ज्मि मृज्वः मृज्मः। मृज्यात्। मार्ष्टु
मृष्टाम् मृड्ढि मृष्टं मृष्ट मार्जानि मार्जाव मार्जाम। अमार्ट्-ड् अमृष्टाम् अमार्ज्जन्-अमृजन्
अमार्ट्-ड् अमृष्टम् अमृष्ट अमार्ज्जम्। अमार्जीत् अमार्क्षीत् अमार्क्षीत्। ममार्ज्ज ममार्ज्जतुः
ममृजतुः ममार्ज्जिथ ममृष्ठ ममार्ष्ठ। मार्ज्जिता मार्ष्टा। मृज्यात्। मार्ज्जिष्यति मृक्ष्यति
मार्क्ष्यति। पाणिनीयमते अस्य ऋदुपधत्वेन अम् मुग्धबोधमते न इति भेदः। कर्म्मणि
मृज्यते। अमार्ज्जि। णिचि मार्ज्जयति ते अमीमृजत् त अममार्जत् त। सनि मिमार्ज्जि-
षति मिमृक्षति। यङि मरीमृज्यते।

कृत्सु मार्ज्जनीयत्। मार्ज्जनम्। मार्गः। मार्ज्जकः। मार्ज्जी। मृष्टः। मृजा। मार्ज्जितुम् म्रष्टुम् मार्ष्टुम्। मार्ज्जितव्यम् म्रष्टव्यम् मार्ष्टव्यम्। मृष्ट्वा। संमृज्य। मृज्यम्। मार्जन्-मृजन्। मृज्यमानः। मार्ज्जिष्यन् म्रक्ष्यन् मार्क्ष्यन्। मार्ज्जिष्यमाणः म्रक्ष्यमाणः मार्क्ष्यमाणः।

मृद क्षोदे क्र्यादिगणीयः परस्मैपदी सकर्म्मकः सेट्।

कर्त्तरि मृद्नाति मृद्नीतः मृद्नन्ति। अमर्दीत्। ममर्द। मर्दितास्मि। कर्म्मणि मृद्यते अमर्दि। णिचः मर्दयति ते। अमीमृदत् त अममर्दत् त।

कृत्सु मर्दनीयम्। मर्दनम्। मर्दनः। मर्दकः। मर्दः। मर्दी। मर्दिता। मर्दित। मर्दी। मर्दितुम्। मर्दितव्यम्। मृदित्वा। संमृद्य। मृद्यम्। मर्दन् मृद्यमानः। मर्दि-ष्यन् ष्यमाणः।

मृश मर्शने तुदादिगणीयः परस्मैपदी सकर्म्मकः अनिट्।

कर्त्तरि मृशति। अम्राक्षीत् अमार्क्षीत् अमृक्षत्। ममर्श ममर्शिथ मम्रष्ठ। म्रष्टा मर्ष्टा। म्रक्ष्यति मर्क्ष्यति। कर्म्मणि मृश्यते। अमर्शि। णिचि मर्शयति ते अमीमृशत् त अममर्शत् त। सनि मिमृक्षति।

हातृषु मर्शनीयम् । मर्शनम् । मर्शः । मर्शकः । मर्शी । म्रष्टा मर्ष्टा । मृष्टः । मृष्टिः । म्रष्टुम् मर्ष्टुम् । म्रष्टव्यम् मर्ष्टव्यम् । मृष्ट्वा । संमृश्य । मृश्यम् । मृशन् मृश्यमानः । मर्शत्र-न् मायः । मर्शत्र-न् मायः ।

परा—परामर्शे (पूर्वोक्तस्य स्मरणे) (न्यायमते व्याप्तिविशिष्टपक्षधर्मताज्ञाने) परामृशति वि—विमर्शे (चिन्तने) विमृशति । अभि—अभिमाने मर्दने पराभवने च अभिमृशति ।

मृश मर्शने गतौ च भ्वादिगणीयः पर० सकर्मकः सेट् ।

कर्त्तरि मर्शति । अमर्शीत् । इत्यादि । अन्यत्र तुदादिगणीयवत् । किन्तु बलादाविट् शतरि मर्शन् ।

मृष सहने चुरादिगणीयः उभयपदी सकर्मकः सेट् ।

कर्त्तरि मर्षयति ते । अमीमृषत् त अममर्षत् त । कर्मणि मर्ष्यते । अमर्षि ।

मृष सहने भ्वादिगणीयः उभयपदी सकर्मकः सेट् ।

कर्त्तरि मर्षति ते । अमर्षीत् अमर्षिष्ट । कर्मणि मृष्यते । अमर्षि । णिचि चुरादिगणीयवत् ।

मृष सहने दिवादिगणीयः उभयपदी सक० सेट् ।

कर्त्तरि मृष्यति ते । अमर्षीत् अमर्षिष्ट । अन्यत् भ्वादिगणीयवत् ।

हतृषु मर्षणीयम्। मर्षणम्। मर्षः। मर्षकः। मर्षी। मर्षिता मर्षितुम्। मृष्टः। मृष्टिः। भौवादिकस्य दैवादिकस्य च मर्षितव्यम्। मर्षित्वा मृषित्वा। दैवादिकस्य चौरादिकस्य च मर्षितः। चौरादिकस्य मर्षयिता। मर्षयितुम्। मर्षयितव्यम्। मर्षयित्वा। संमर्ष्य। इति भेदः। शतरि शानचि च चौरादिकस्य मर्षयन् माणः मर्ष्यमाणः। मर्षयि-ष्यन् ष्यमाणः। दैवादिकस्य मृष्यन् मृष्यमाणः मर्षि-ष्यन् ष्यमाणश्च। भौवादिकस्य मर्षन् मृष्यमाणः। मर्षि-ष्यन् ष्यमाणः।

मोच मोचने वा चुरा० उभय० पक्षे भ्वादि० पर० सक० सेट्।

कर्त्तरि मोचयति ते मोचति। अमुमोचत् त अमोचीत्। कर्म्मणि मोच्यते अमोचि।

हतृषु मोचणीयम्। मोचणम्। मोचः। मोचकः। मोचयिता मोचिता। मोचितः। मोचणा मोचा। मोचयितव्यम् मोचितव्यम्। मोचयितुम् मोचितुम्। मोचयित्वा मोचित्वा। संमोच्य। मोचम्। मोचय-न् माणः मोचन् मोच्यमाणः। मोचयि-ष्यन् ष्यमाणः। कर्म्मणि मोचिष्यमाणश्च। मोचि-ष्यन् ष्यमाणः।

म्ना अभ्यासे भ्वादिगणीयः पर० सक० अनिट् ।

कर्त्तरि मनति मनतः मनन्ति । मनेत् । मनतु । अमनत् । अम्नासीत् अम्नासिष्टाम् अम्नासिषुः । मम्नौ मम्निथ मम्नाथ । म्नाता । म्नायात्-म्नेयात् । म्नास्यति ॥ कर्म्मणि म्नायते । अम्नायि । अम्नायिषाताम् अम्नासाताम् । णिचि म्नापयति ते अमिम्नपत् त ।

कृत्सु म्नानीयम् । म्नानम् । आम्नायः । म्नायी । म्नायकः । म्नाता । आम्नातः । म्नातिः । म्नातुम् म्नातव्यम् । म्नात्वा । संम्नाय । म्नेयम् । मनन् म्नायमानः । म्नास्यन् म्नायिष्यमाणः । कर्म्मणि म्नास्यमानश्च ।

म्लै हर्षक्षये भ्वादिगणीयः पर०. अकर्म्मकः अनिट् ।

कर्त्तरि म्लायति । अम्लासीत् । म्लायात् म्लेयात् । म्लानमित्यादि भेदः । अन्यत् ग्लैवत् । यज दाने पूजने यागे ( देवोद्देश्यकहविस्त्यागे ) च भ्वादिगणीयः उभयपदी सकर्म्मकः अनिट् ।

कर्त्तरि यजति ते यजेत् त । यजतु ताम् । अयजत् त । अयाक्षीत् अयष्ट । इयाज ईजतुः इयजिथ इयष्ठ ईजिव ईजे । यष्टासि से । इज्यात् यक्षीष्ट । यक्ष्यति ते । कर्म्मणि इज्यते । अयाजि । णिचि याजयति ते अयीयजत् त । सनि यियक्षति ते ।

क्तत्सु यजनीयम् । यजनम् । यागः । याजकः । याजी । यष्टा । इष्टः । इष्टिः । क्यप्-इज्या ।
वनिप् यज्वा । यष्टव्यम् । यष्टुम् । इष्ट्वा । समिज्य । याज्यम् । यजन् यजमानः इज्यमानः ।
यच्छ-न् मागः । सनः यियक्षन् यियक्षुः यङः ऊक-यायजूकः ।

यत खेदे उपस्कारणे च चुरादिगणीयः उभ० अकर्म्मकः सेट् ।

कर्त्तरि यातयति ते । अयीयतत्-त । कर्म्मणि यात्यते अयाति ।
क्तत्सु यातनीयम् । यातनम् । यातकः । यातयिता । क्तिन्-बाधित युच् यातना । यातयितव्यम् ।
यातयितुम् । यातयित्वा । संयात्य । यातयन् यातयमानः यात्यमानः । यातयि-ष्यन्
ष्यमाणः । कर्म्मणि यातिष्यमाणश्च ।
निर्—निर्यातने ( प्रतिरूपकरणेन शोधने प्रत्यर्पणे च ) निर्यातयति ते ।

यत यत्ने भ्वादिगणीयः आत्मनेपदी अकर्म्मकः सेट् ।

कर्त्तरि यतते । यतेत । यतताम् । अयतत । अयतिष्ट । येते । यतिताहे । यतिषीष्ट ।
यतिष्यते । अयतिष्यत । भावे यत्यते । अयाति । णिचि यातयति ते । अयीयतत् त ।

कृत्सु यतनीयम् । यतनम् । यतिता । यत्तः आयत्तः प्रयः यत्तिः । यतितव्यम् । यतितुम् । यतित्वा । नङ् यत्नः । आयत्य । यात्यम् । यतमानः । यतिष्यमाणः ।

आ—वशीभवने आयतते आयत्तः आयत्तिः ।

यत्र संकोचने, इदित् चुरादिगणीय: उभयपदी सकर्म्मक: सेट् ।

कर्त्तरि यन्त्रयति-ते । अययन्त्रत्-त । कर्म्मणि यन्त्र्यते अयन्त्रि ।

कृत्सु यन्त्रणीयम् । यन्त्रणम् । यन्त्रः । यन्त्रकः । यन्त्रयिता । यन्त्रित । क्तिन् नास्ति युच् यन्त्रणा । यन्त्रयितव्यम् । यन्त्रयितुम् । यन्त्रयित्वा । संयन्त्र्य । यन्त्राम् । यन्त्रयन् माणः यन्त्र्यमाणः । यन्त्रयिष्यन् ष्यमाणः । कर्म्मणि यन्त्रिष्यमाणश्च ।

यम उपरमे भ्वादिगणीय: परस्मैपदी अकर्म्मक: अनिट् ।

कर्त्तरि यच्छति । यच्छेत् । यच्छतु । अयच्छत् । अयंसीत् अयंसिष्टाम् अयंसिषुः । ययाम येमतुः येमिथ-ययन्थ येमिव । यन्तासि । यम्यात् । यंस्यति । भावे यम्यते । अयमि अयामि । णिचि यमयति ते यामयति ते । सनि यियंसति । यङि यंयम्यते ।

कृत्सु यमनीयम्। यमनम्। य॰. यामः। यामकः यमकः। यमी यामी। यन्ता। यतः। यतिः।
यन्तव्यम्। यन्तुम्। यमित्वा यान्त्वा। संयम्य। यम्यः। यच्छन् यम्यमानः। यंस्यन् स्यमानः।
आ—आयामे दीर्घभवने आत्म॰ आयच्छते। दीर्घीकरणे तु सकर्म्मकः पादमायच्छते आयामः।
नि—नियमे ( व्याप्तौ व्रतभेदे च )। नियच्छति—नियमः नियतः नियतिः। सम्—
संयमने ( बन्धने ) संयच्छति बध्नाति। संयमः। संयतः। उद्—उद्यमे आत्म॰ उद्यच्छति
उद्यमः। उद्यतः। उद्यतिः।

यस यत्ने दिवादिगणीयः पर॰ अक॰ सेट्।

कर्त्तरि यस्यति यसति संयस्यति संयसति प्रयस्यति निर्यस्यति। अयसत् अयासीत् अयसीत्।
ययास येसतुः। भावे यस्यते। अयासि। णिचि यासयति ते अयीयसत् त।
कृत्सु यसनीयम्। यसनम्। यासः प्रयासः निर्य्यासः। प्रयासी। यसिता। यस्तः। यस्तिः।
यसितव्यम्। यसितुम्। यसित्वा यस्त्वा। प्रयस्य। यास्यम्। यस्यन् यसन् संयस्यन् संयसन्
प्रयस्यन्। यसिष्यन्। आ—आयासे। आयस्यति। आयासः।

या गतौ अदादिगणीयः परस्मैपदी सक० अनिट्।

कर्त्तरि याति। यायात्। यातु। अयात् अयुः-अयान्। अयासीत् अयासिष्टाम् अयासिषुः। ययौ ययतुः ययिथ-ययाथ ययिव। यातासि। यायात्। यास्यति। कर्म्मणि यायते। अयायि। णिचि यापयति ते अयीयपत् त। सनि यियासति।

कृत्सु यानीयम्। यानम्। यायी। याता। यातः। यातिः। यातव्यम्। यातुम्। यात्वा। प्रयाय। येयम्। यान् यायमानः। यास्यन् स्यमानः। सनः-यियासा। यियासुः। यङः वरच् यायावरः।

याच प्रार्थने भ्वादिगणीयः उभयपदी द्विकर्म्मकः सेट्।

कर्त्तरि याचति ते। याचे-त् त। याच-तु-ताम्। अयाच-त् त। अयाचीत् अयाचिष्ट। ययाच-चे। याचिता-सि से। याच्यात् याचिषीष्ट। याचिष्य-ति ते। कर्म्मणि याच्यते। अयाचि। णिचि याचयति ते। अययाचत् त।

कृत्सु याचनीयम्। याचनम्। याचकः। याची। याचिता। याचितः। याचितव्यम्। याचितुम्। याचित्वा। नञ् याच्ञा। उपयाच्य। याच्यम्। याचन् मानः यांच्यमानः। याचि-ष्यन् ष्यमाणः।

यु मिश्रणे अमिश्रणे च अदा० परस्मैपदी सक० सेट्।

कर्त्तरि यौति युतः युवन्ति। युयात्। यौतु। अयौत्। अयावीत्। युयाव युयुवतुः युयविथ। यातासि। यायात्। यविष्यति। कर्म्मणि यूयते। अयावि। णिचि यावयति ते। सनि यियविषति युयूषति। णिचः सनि यियावयिषति ते।

कृत्सु यवनीयम्। यवनम्। यवः। यविता। युतः। युतिः। यवितव्यम्। यवितुम्। युत्वा। संयुत्य। यव्यम् याव्यम्। युवन् यूयमानः। यविष्यन् ष्यमाणः। कर्म्मणि याविष्यमाणश्च।

युज समाधौ दिवादिगणीयः आत्मनेपदी अकर्म्मकः अनिट्।

कर्त्तरि युज्यते। युज्येत। युज्यताम्। अयुज्यत। अयुक्त। युयुजे। योक्तासे। युक्षीष्ट। योक्ष्यते। भावे युज्यते। अयोजि। णिचि योजयति ते। अयूयुजत् त।

कृत्सु योजनीयम्। योजनम्। योगः। योजकः। घिणुन् योगी। योक्ता। युक्तः। युक्तिः। योक्तव्यम्। योक्तुम्। संयुज्य। योज्यम् योग्यः। युज्यमानः योक्ष्यमाणः।

युज युतौ रुधादिगणीयः उभयपदी सकर्म्मकः अनिट्।

कर्त्तरि युनक्ति युङ्क्तः युञ्जन्ति। युनक्षि युङ्क्थः युनज्मि युञ्ज्वः युङ्क्ते। युञ्ज्यात् युञ्जीत। युनक्तु। युञ्जानि युङ्क्ताम्। अयुन-क्-ग् अयुङ्क्त। अयुजत् अयौक्षीत् अयुक्त। कर्म्मणि युज्यते। [अयोजि। क्त्वादौ दैवादिकवत् शतरि युञ्जन्, युञ्जान इति भेदः।

उद्-उद्योगे। उद्युङ्क्ते। उद्युक्तः उद्योगः। प्र-प्रयोगे प्रयुङ्क्ते प्रयुक्तः प्रयोगः।

अनु—प्रश्ने अनुयुङ्क्ते। अनुयोगः। अनुयुक्तः। अभि—अभियोगे अभियुङ्क्ते अभियुक्तः अभियोगः।

उप-भोजने उपकारार्थे उपयुङ्क्ते भुङ्क्ते उपकरोति वा उपयुक्तः उपयोगः। नि-नियोगे नियुङ्क्ते नियोगः। एषु आत्मनेपदम्।

युध योधने दिवादिगणीयः आत्मनेपदी सक० अनिट्।

कर्त्तरि युध्यते। युध्येत। युध्यताम्। अयुध्यत अयुद्ध। युयुधे। योद्धासे। युत्सीष्ट। योत्स्यते। कर्म्मणि युध्यते। अयोधि। णिचि योधयति ते। अयूयुधत् त।

क्तादौ योधनीयम्। योधनम्। योधी। योद्धा। युद्धः। युद्धिः। योद्धव्यम्। योद्धुम्। युद्ध्वा। संयुध्य। योध्यः। ध्यमानः योत्स्यमानः।

रक्ष पालने भ्वादिगणीयः पर० सक० सेट् ।

कर्त्तरि रक्षति । रक्षेत् । रक्षतु । अरक्षत् । अरक्षीत् । ररक्ष । रक्षिता । रक्ष्यात् । रक्षिष्यति । कर्म्मणि रक्ष्यते । अरक्षि । णिचि रक्षयति ते । अररक्षत् त ।

कृत्सु रक्षणीयम् । रक्षणम् । रक्षः । रक्षकः । रक्षी । रक्षिता । रक्षितः । रक्षा । रक्षितव्यम् । रक्षितुम् । रक्षित्वा । संरक्ष्य । रक्ष्यम् । रक्षन् रक्ष्यमाणः । रक्षिष्यन् ष्यमाणः । प्रनिरक्षति ।

रच विधाने अदन्तचुरादिगणीयः उभयपदी सक० सेट् ।

कर्त्तरि रचयति ते । रचये-त् त । रचय-तु-ताम् । अरचय-त् त । अररचत् त । रचयि-तासि से । कर्म्मणि रच्यते । अरचि ।

कृत्सु रचनीयम् । रचनम् । रचकः । रचयिता । रचितः । रचना । रचयितुम् । रचयित्वा । विरचय्य विरच्य । रच्यम् । रचयन् मानः रच्यमानः । रचयि-ष्यन् ष्यमाणः ।

रन्ज रञ्जने ( वर्णान्तरसम्पादाने सक० प्रीतौ अक० ) दिवादिगणीयः उभयपदी अनिट् ।

कर्त्तरि रज्य-ति ते । रज्ये-त् त । रज्यतु-ताम् । अरज्यत् अरज्यत । अराङ्क्षीत् अरङ्क्त । ररञ्ज

ररञ्जिथ ररङ्क्थ ररञ्जिव ररञ्जिव ररञ्जे ररञ्जे। रङ्क्तासि से। रज्यात् रङ्क्षीष्ट। रङ्क्ष्यति ते। भावे कर्म्मणि च रज्यते अरञ्जि। णिचि रञ्जयति ते। अररञ्जत् त। सनि रिरङ्क्षति ते।

कृत्सु रञ्जनीयम्। रञ्जनम्। रङ्गः। रञ्जकः। रङ्क्ता। रक्तः। रक्तिः। रङ्क्तव्यम्। रङ्क्तुम्। रक्त्वा। उपरज्य। रङ्ग्यम्। रज्यन् रज्यमानः। रङ्क्ष्यन् रङ्क्ष्यमाणः। उप (ग्रहणे ग्रासे च) उपरज्यति।

अनु–प्रीतौ अनुरज्यति प्रीणाति अनुरक्तः अनुरागः। वि–विरागे विरज्यति विरक्तः। विरागः।

रन्ज रागे भ्वादिगणीयः उभय० अकर्म्मकः अनिट्।

कर्त्तरि रजति रजते। रजेत् त। रज-तु-ताम्। अरज-त् अरजत। अराङ्क्षीत् अरङ्क्त। णिचि रंजयति ते मृगान् मारयतीत्यर्थः। अन्यत्र रञ्जयति।

रध हिंसायां दिवादिगणीयः सकर्म्मकः पर० वेट्।

कर्त्तरि रध्यति। रध्येत्। रध्यतु। अरध्यत्। अरधत्। ररन्ध रेधतुः ररन्धतुः। ररन्धिथ ररद्ध ररन्धिव रेध्व। रधितासि। रत्स्यति। कर्म्मणि रध्यते अरन्धि। णिचि रन्धयति ते अररन्धत् त।

कृत्सु रन्धनीयम् । रन्धनम् । रन्धः । रन्धकः । रधिता रद्धा । रद्धः । रधितव्यम् रद्धव्यम् ।
रधितुम् रद्धुम् । रधित्वा रद्धा । संरध्य । रध्यन् । रधिष्यन् ष्यमाणः रत्स्यन् स्यमानः ।

रभ आरम्भे भ्वादिगणीयः आत्मनेपदी सकर्म्मकः अनिट् ।

कर्त्तरि रभते । रभेत । रभताम् । अरभत । अरब्ध । रेभे । रब्धासे । रप्सीष्ट । रप्स्यते ।
णिचि रम्भयति ते । अररम्भत् त ।

कृत्सु रम्भणीयम् । रम्भणम् । आरम्भः । रम्भी आरम्भी । रब्धा । रब्धः । रब्धिः । रब्धुम् ।
रब्धव्यम् । रब्ध्वा । आरभ्य । आरम्भुः । रभमाणः रभ्यमाणः । रप्स्यमानः ।

रम क्रीड़ने भ्वादिगणीयः आत्मनेपदी अकर्म्मकः अनिट् ।

कर्त्तरि रमते । रमेत । रमताम् । अरमत । अरंस्त । रेमे । रन्तासे । रंसीष्ट । रंस्यते । भावे
रम्यते । अरामि । णिचि रमयति अरीरमत् त । सनि रिरंसते । यङि रंरम्यते ।

कृत्सु रमणीयम् । रमणम् । रामः । रामकः । रामी । रन्ता । रतः । रतिः । रन्तव्यम् । रन्तुम् ।
रमित्वा रन्त्वा । उपरम्य । रम्यः । रममाणः रंस्यमानः ।

उप—निवृत्तौ नाशे कर्म्मत्यागे च । वा पर० उपरमति ते । उपरतः उपरतिः । वि—विश्रामे वा पर०२०२

विरमति ते । विरामः विरतः । विरतिः। उप आ – निवृत्तौ प्रत्यागतौ च । उपारमते उपारतः

रस शब्दे भ्वादिगणीयः पर० अकर्म्मकः सेट् ।

कर्त्तरि रसति । रसेत् । रसतु । अरसत् । अरासीत् अरसीत् । ररास रेसतुः । रसिताश्मि ।

रस्यात् । रसिष्यति । भावे रस्यते । अरासि । णिचि रासयति ते । अरीरसत् त ।

कृत्सु रसनीयम् । रसनम् । रासः । रासकः । रासी । रसिता । रसितः । रसितिः । रसितव्यम् ।

रसितुम् । रसित्वा । संरस्य । रास्यम् । रसन् रसिष्यन् ।

रस आस्वादे अदन्तचुरादिगणीयः उभयपदी सकर्म्मकः सेट् ।

कर्त्तरि रसय-ति ते । रसयेत् त । रसय-तु ताम् । अरसय-त् त । अररस-त् त । रसयाम्-बभूव

आस-चकार-चक्रे । रसयिताश्मि से । कर्म्मणि रस्यते । अरसि ।

कृत्सु रसनीयम् । रसनम् । रसः। रसी । रसकः । रसयिता । रसितः । रसना । रसयितव्यम् ।

रसयितुम् । रसयित्वा । संरस्य । रस्यम् । रसयन् मानः रस्यमानः । रसयिष्यन् ष्यमाणः ।

रह त्यागे अदन्तचुरादिगणीयः उभयपदी सकर्म्मकः सेट् ।

कर्त्तरि रहयति ते । रहयेत् त । रहयतु ताम् । अरहयत् त । अररहत् त । कर्म्मणि रह्यते। अरहि
कृत्सु रहणीयम् । रहणम् । रहः । रहकः । असि-रहः । रहयिता । रहितः । रहणा ।
रहयितव्यम् । रहयितुम् । रहयित्वा । विरहय्य विरह्य । रह्यः । रहयन् माणः रह्यमाणः ।
रहयिष्यन् ष्यमाणः । कर्म्मणि रहिष्यमाणश्च ।

राज दीप्तौ भ्वादिगणीयः उभयपदी अकर्म्मकः सेट् फणादिः ।

कर्त्तरि राजति ते । राजेत् त । राजतु ताम् । अराजत् त । अराजीत् अराजिष्ट । रराज रेजतुः
रराजतुः रेजे रराजे । राजितासि से । राज्यात् राजिषीष्ट । राजिष्यति ते । भावे राज्यते ।
अराजि । णिचि राजयति ते अरराजत् त ।

कृत्सु राजनीयम् । राजनम् । राजः। राजकः। राजी । राजिता । राजितः । राजा । क्विप् राट्-ड् ।
राजितव्यम् । राजितुम् । राजित्वा । विराज्य । राज्यम् । राजन् मानः राजिष्यन् ष्यमाणः ।
निर्—राज—णिच् निर्म्मञ्छने ( आरति ) नीराजयति नीराजना ।

राध सिद्धौ शुभाशुभविषयप्रश्ने च दिवादिगणीयः पर० अनिट् फणादिः ।

कर्त्तरि राध्यति । राध्येत् । राध्यतु । अराध्यत् । अरात्सीत् । रराध रेधतुः रराधतुः । राद्धा । राध्यात् । रात्स्यति । भावे राध्यते । अराधि । णिचि राधयति ते । सनि आरिरात्सति ।

कृत्सु राधनीयम् । राधनम् । राधकः । राधी । राद्धा । राद्धः । राद्धिः । राद्धव्यम् । राद्धुम् । राद्धा । अपराध्य । राध्यम् । राध्यन् रात्स्यन् ।

आ—सेवने सकर्म्मकः आराध्यति आराधनीयम् । णिच् युच् आराधना । अप—अपराध अपराध्यति अपराधः ।

रिच विरेचने रुधादिगणीयः पर० अकर्म्मकः अनिट् ।

कर्त्तरि रिणक्ति रिक्तः रिञ्चन्ति रिणक्षि रिक्थः रिणच्मि रिञ्चः । रिञ्च्यात् । रिणक्तु रिङ्क्ताम् रिञ्चन्तु रिङ्क्धि रिणचानि । अरिणक् अरिङ्क्ताम् अरिञ्चन् । अरैक्षीत् अरिचत् । रिरेच । रेक्तासि । रिच्यात् । रेक्ष्यति । भावे रिच्यते अरेचि । णिचि रेचयति ते अरीरिचत् त ।

कृत्सु रेचनीयम् । रेचनम् । रेकः । रेचकः । रेची । रेक्ता । रिक्तः । रिक्तिः । रेक्तव्यम् । रेक्तुम् । रिक्त्वा । अतिरिच्य । रेक्यम् । रिञ्चन् रेक्ष्यन् ।

अति—अतिशये ( अतिक्रमे ) सकर्मकः अतिरिणक्ति अतिरिच्यमानः अतिरिक्तः। अतिरेकः।

वि—अति व्यतिक्रमे ( विपरीतकरणे ) व्यतिरिणक्ति व्यतिरेकः व्यतिरिक्तः। व्यतिरिच्यमानः

रु ध्वनौ अदादिगणीयः परस्मैपदी अकर्मकः सेट्।

कर्त्तरि रवीति-रौति रुवीतः। ( मुग्धबोधमते ) रुतः रुवन्ति रौषि-रवीषि ( रुथः ) रुवीथः (रुथ)रुवीथ रौमि-रवीमि रुवीवः (रुवः)। रुवीयात् (रुयात्)। रौतु-रवीतु रुवीताम् (रुताम्) रुवन्तु। अरौत् अरवीत् अरुवीताम् (अरुताम्) अरुवन् अरौः अरवीः। अरावीत् अरौषीत्। रुराव रुरविथ रुरुविव। रविता रोता। रूयात्। रविष्यति रोष्यति। भावे रूयते अरावि। णिचि रावयति ते। अरीरवत् त। सनि रुरूषति। यङि रोरूयते।

कृत्सु रवणीयम्। रवणम्। रवः। आरावः विरावः संरावः। रावकः। रावी। रविता रोता। रुतः। रुतिः। रवितव्यम् रोतव्यम्। रवितुम् रोतुम्। रुत्वा। आरुत्य। रव्यम् राव्यम्॥ क्विप् रुत्। रुवन्। रविष्यन् रोष्यन्। यङः रोरूयमाणः।

रुच प्रीतौ प्रकाशे च भ्वादिगणीयः आत्मनेपदी अकर्मकः सेट्।

कर्त्तरि रोचते। रोचेत। रोचताम्। अरोचत। अरुचत् अरोचिष्ट। रुरुचे। रोचितासे भावे रुच्यते। अरोचि। णिचि रोचयति ते। अरूरुचत् त। सनि रुरुचिषते। रुरोचिषते।

कृत्सु रोचनीयम् । रोचनम् । रोचः । रोचकः । रोची । रोचिता । रुचितः । भावादि- 
कर्म्मणोस्तु रुचितम् रोचितम् । रुक्तिः । रोचितव्यम् । रोचितुम् । रोचित्वा रुचित्वा ।
संरुच्य । रोच्यम् । रोचमानः । रोचिष्यमाणः ।

रुज भङ्गे रोगे, च तुदादिगणीयः पर० अकर्म्मकः अनिट् ।

कर्त्तरि रुजति । रुजेत् । रुजताम् । अरुजत् । अरौक्षीत् । रुरोज रुरोजिथ रुरुजिव ।
रोक्ता । रोक्ष्यति । भावे रुज्यते अरोजि । णिचि रोजयति ते । अरूरुजत् त ।
कृत्सु रोजनीयम् । रोजनम् । रोगः । घिणुन् रोगी । रोक्ता । रुग्नः । क्तिन् नास्ति अ रुजा ।
रोक्तव्यम् । रोक्तुम् । रुक्त्वा । रोग्यम् । रुजन् रोच्यन् ।

रुद रोदने अदादिगणीयः पर० अकर्म्मकः सेट् ।

कर्त्तरि रोदिति रुदितः रुदन्ति रोदिषि रुदिथः रुदिथ रोदिमि रुदिवः । रुद्यात् । रोदितु
रुदिताम् रुदन्तु रुदिहि रोदानि । अरोदीः अरोदः अरुदिताम् अरुदन् अरोदीः अरुदः ।
अरुदत् अरोदीत् । रुरोद रुरोदिथ रुरुदिव । रोदिता । रुद्यात् । भावे रुद्यते अरोदि ।
णिचि रोदयति ते । अरूरुदत् त । सनि रुरुदिषति । यङि रोरुद्यते ।

कृत्सु रोदनीयम्। रोदनम्। रोदः। रोदकः। रोदी। रोदिता। रुदितः। रुत्तिः। रोदितव्यम्। रोदितुम्। रुदित्वा। विरुद्य रोदम्। रुदन्। रोदिष्यन्। सनः रुरुदिषा। रुरुदिषन्। यङः रोरुद्यमानः।

रुध आवरणे रुधादिगणीयः उभ० सक० अनिट्।

कर्त्तरि रुणद्धि रुन्धः रुन्धन्ति रुणत्सि रुन्धः रुन्ध रुणध्मि रुन्ध्वः रुन्ध्मः। रुन्ध्यात् रुन्धीत। रुणद्धु रुन्धाम् रुन्धन्तु रुन्धि रुन्धाम्। अरुणत् अरुन्धाम् अरुन्धन् अरुणत् अरुणः अरुन्ध। अरुधत् अरौत्सीत् अरुद्ध। रुरोध रुरोधिथ रुरुधिव रुरुधे। रोद्धासि से। रुध्यात् रुत्सीष्ट। रोत्स्यति ते। कर्म्मणि रुध्यते। अरोधि। णिचि रोधयति ते। अरूरुधत् त।
कृत्सु रोधनीयम्। रोधनम्। रोधः। रोधकः। रोधी। रोद्धा। रुद्धः। रुद्धिः। रोद्धव्यम्। रोद्धुम्। रुद्ध्वा। संरुध्य। रोध्यम्। रुन्धन् रुन्धानः रुध्यमानः। रोत्स्यन् स्यमानः।
नि - निरोधे सक० प्रलये अकर्म्मकः निरुणद्धि निरोधः। प्रति - प्रतिरोधे प्रतिरुणद्धि प्रतिरुद्धः

प्रतिरोधः। उप—उपरोधे उपरुणद्धि उपरोधः उपरुद्धः। अनु—अनुरोधे अनुरुणद्धि अनुरुद्धः अनुरोधः। वि—विरोधे विरुणद्धि विरुद्धः विरोधः।

रुह रोहणे भ्वादिगणीयः पर० सकर्म्मकः अनिट्।

कर्त्तरि रोहति। रुहेत्। रोहतु। अरोहत्। अरुक्षत्। रुरोह रुरोहिथ रुरुहिव। रोढ़ा। रुह्यात्। रोक्ष्यति। कर्म्मणि रुह्यते अरोहि। णिचि रोपयति ते रोहयतिते अरूरुपत् त अरूरुहत् त।

कृत्सु रोहणीयम्। रोहणम्। रोहः। रोही। रोढ़ा। रूढ़ः। रूढ़िः। रोढ़व्यम्। रोढुम्। रूढ्वा। आरुह्य। रोहम्। रोहन्। रुह्यमाणः। रोक्ष्यन्, माणः।

आ—आरोहे आरोहति। आरोहः। आरोहणम्। आरूढः। अव—अवरोहे (ऊर्द्ध्वस्थानादधोगमने) अवरोहति अवरोहः। वि—उन्मूलीभवने विरोहति उच्छिद्यते।

लक्ष दर्शने चुरादिगणीयः उभ० सकर्म्मकः लोचने आत्मनेपदी सेट्।

कर्त्तरि लक्षयति ते। अललक्षत् त। लक्षयितासि से लक्षयिष्यति ते। कर्म्मणि लक्ष्यते अलक्षि

कृत्सु लक्षणीयम् । लक्षणम् । लक्षः । लक्षकः । लक्षी । लक्षयिता । लक्षितः । लक्षणा । लक्षयितव्यम् । लक्षयितुम् । लक्षयित्वा । संलक्ष्य । लक्ष्यम् । लक्षयन् माणः लक्ष्यमाणः । लक्षयिष्यन् ष्यमाणः कर्म्मणि लक्षिष्यमाणश्च । उप-उपलक्षणे (स्वस्य स्वान्यस्य च लक्षणया बोधने) उपलक्षयति । वि-विलक्षणे (विशेषधर्म्मेण ज्ञापने) । विलक्षयति विलक्षणम् ।

लघि अभोजने अक० अतिक्रमे सक० भ्वादि० आत्म० सेट् ।

कर्त्तरि लङ्घते । अलङ्घिष्ट । ललङ्घे । कर्म्मणि भावे च लङ्घ्यते अलङ्घि । णिचि लङ्घयति-ते । अललङ्घत्-त ।

कृत्सु लङ्घनीयम् । लङ्घनम् । लङ्घः । लङ्घकः । लङ्घी । लङ्घिता । लङ्घितः । लङ्घा । लङ्घितव्यम् । लङ्घितुम् । लङ्घित्वा । विलङ्घ्य । लङ्घ्यम् । लङ्घमानः लङ्घ्यमानः । लङ्घिष्यन् ष्यमाणः ।

लप भाषणे भ्वादि० पर० सक० सेट् ।

कर्त्तरि लपति । अलापीत् अलपीत् । ललाप लेपतुः ॥ कर्म्मणि । लप्यते । अलापि । णिचि लापयति ते अलीलपत्-त ।

कृत्सु । लपनीयम् । लपनम् । लापः । लापकः ॥ लापी । लपिता । लपितः । लप्तिः । लपितव्यम् । लपितुम् । लपित्वा । विलप्य । लाप्यम् । लपन् लप्यमानः । लपिष्यन् ष्यमाणः ।

वि-विलापे (परिदेवने) विलपति विलापः विलपितम् । प्र—प्रलापे (अनर्थकवाक्यप्रयोगे) प्रलपति प्रलापः प्रलपितम् । सम्—संलापे (मिथो भाषणे) संलपति संलापः । अनु—मुहुर्भाषणे । अनुलपति अनुलापः । अप—अपलापे (अन्यथास्थितस्य वस्तुनोऽन्यथात्वप्रतिपादने) अपलपति अपलापः ।

लबि अवस्रंसने भ्वा० आत्म० अक० सेट् ।

कर्त्तरि लम्बते । अलम्बिष्ट । ललम्बे । कर्म्मणि । लम्ब्यते । अलम्बि । णिचि लम्बयति-ते । अललम्बत्-त ।

कृत्सु लम्बनीयम् । लम्बनम् । लम्बः । लम्बकः । लम्बी । लम्बिता । लम्बितः । लम्बा । लम्बितव्यम् । लम्बितुम् । लम्बित्वा । अव-अधोगमने अक० अवलम्बने (आश्रयकरणे) च सक० । अवलम्बते अवलम्बः । वि-विलम्बकरणे । विलम्बते । विलम्बितम् । आ-आलम्बने आलम्बते । आलम्बनम् ।

लभ प्राप्तौ भ्वादि० आत्म० सक० अनिट् ।

कर्त्तरि लभते । अलब्ध । लेभे । लब्धासे । लप्स्यते । कर्म्मणि लभ्यते अलाभि अलम्भि प्रालम्भि । णिचि लम्भयति ते अललम्भत् त सनि लिप्सते ।

कृत्सु लभनीयम् । लभनम् । लाभः । आलम्भः । विप्रलम्भः । लाभी । लब्धा । लब्धम् । लब्धव्यम्

लब्धिः। त्रिम—लब्ध्रिमः। लब्ध्वा। आलभ्य। लभ्यम्। आलम्भ्यः। दुर्लभः। सुलभः। लभमानः लभ्यमानः। लप्स्यमानः। सन् लिप्सा लिप्सुः। आ—आलभने (स्पर्शने घातने च) आलभते आलब्धः आलम्भ्यः। वि-प्र—विप्रलम्भे। (विसंवादे) विप्रलभते विप्रलब्धः विप्रलम्भः। उप-आ—उपालम्भे (निन्दापूर्व्वकदुष्टवचने) उपालभते उपालम्भः। उपालब्धः।

लष इच्छायाम् वा दिवादि० पक्षे भादि० उभ० सक० सेट्।

कर्त्तरि लष्यति-ते लषति-ते। अलाषीत् अलषीत् अलषिष्ट। ललाष लेषतुः लेषे। कर्म्मणि लष्यते अलाषि। णिचि लाषयति ते। अलीलषत् त।

कृत्सु। लषणीयम्। लषणम्। लाषः। लाषकः। लाषी। उक लाषुकः। लषिता। लषितः। लष्टिः। लषितव्यम्। लषितुम्। लषित्वा। अभिलष्य। लाष्यम्। लष्यन् लषन् लष्यमाणः लषमाणः। कर्म्मणि लष्यमाणः। लषिष्यन् ष्यमाणः।

लस संबन्धे दीप्तौ च वा दिवा० पक्षे भा० पर० अक० सेट्।

कर्त्तरि लस्यति लसति। अलासीत् अलसीत्। ललास लेसतुः। भावे लस्यते अलासि। णिचि लासयति-ते अलीलसत्-त।

कृत्सु। लसनीयम्। लसनम्। लासः। लासी। लसिता। लसितः। लसितव्यम्। लसिः।

लषितुम् । लषित्वा । विलस्य । लास्यम् । लस्यन् लषन् । लषिष्यन् । वि—विलासे विलस्यति विलषति । विलासः । उद्-उल्लासे (हर्षं करणे) उल्लस्यति उल्लषति । उल्लासः ।

लस्ज व्रीड़ायाम् भ्वादि० आत्म० अक० सेट् ।

कर्त्तरि लज्जते । अलज्जिष्ट । भावे लज्ज्यते । अलज्जि । णिचि लज्जयति-ते । अललज्जत्-त ।

कृत्सु लज्जनीयम् । लज्जनम् । लज्जिता । लग्नः । लज्जा । लज्जितव्यम् । लज्जमानः लज्जिष्यमाणः ।

लिख लेखने तुदा० पर० सक० सेट् ।

कर्त्तरि लिखति । अलेखीत् । लिलेख । कर्म्मणि लिख्यते । अलेखि । णिचि लेखयति-ते । अलीलिखत्-त । सनि, लिलेखिषति लिलिखिषति ।

कृत्सु लेखनीयम् । लेखनम् । लेखः । लेखी । लेखिता । लिखितः । लिखितव्यम् । लिखित्वा लेखित्वा । विलिख्य । लेख्यम् । लिखन् लिख्यमानः । लिखिष्यन् ष्यमाणः । उद्-उल्लेखे (उच्चारणे विदारणे च । उल्लिखति ।

लिप लेपने तुदा० सक० उभ० अनिट् मुचादि ।

कर्त्तरि लिम्पति-ते । अलिपत् अलिपत अलिप्त । लिलेप लिलिपे । लेप्तासि-से । कर्म्मणि लिप्यते अलेपि । णिचि लेपयति-ते । अलीलिपत्-त ।

कृत्सु लेपनीयम् । लेपनम् । लेपः । लेपकः । लेपी । लेप्ता । लिप्तः । लिप्तिः । लेप्तव्यम् । लिप्त्वा । संलिप्य । लेप्यम् । लिम्पन् लिम्पमानः लिप्यमानः । लेप्स्यन् लेप्स्यमानः । अव-गर्वे अक० अवलिम्पति अवलिप्तः अवलेपः । अनु-चन्दनादिमर्द्दने । अनुलिम्पति अनुलेपनम् । अनुलिप्तः ।

लिह आस्वादे अदा० उभ० सक० अनिट् ।

कर्त्तरि लेढि लीढः लिहन्ति लेक्षि लीढः लीढ लेह्मि लीढे । लिह्यात् लिहीत । लेढु लीढाम् लिहन्तु लीढि लेहानि लीढाम् । अलेट्-ड् अलीढाम् अलिहन् अलीढ । अलिक्षत्-त । लिलेह लिलिहे । लेढासि-से । लिह्यात् लिक्षीष्ट । लेक्ष्यति । कर्म्मणि लिह्यते । अलेहि । णिचि लेहयति ते । अलीलिहत् । सनि लिलिक्षति-ते । यङि लेलिह्यते ।

कृत्सु लेहनीयम् । लेहनम् । लेहः । लेहकः । लेही । लेढा । लीढः । लेढव्यम् । लीढिः । लेढुम् । लीढ्वा । संलिह्य । लेह्यम् । लिहन् । लिहानः लिह्यमानः लेक्ष्यन् क्ष्यमाणः ।

ली श्लेषे दिवा० आत्म० अक० अनिट् ।

कर्त्तरि लीयते । लीयेत । लीयताम् । अलीयत । अलेष्ट अलास्त । लिल्ये । लेतासे लातासे । लेषीष्ट लासीष्ट । लास्यति लेष्यति । भावे लीयते । अलायि । णिचि विलीनयति-ते विलापयति ते घृतम् अन्यत्र विलाययतीत्येव । उद्-प्रतारणाभिभवपूजादौ आत्म० उल्लापयते ।

कृत्सु । लयनीयम् लानीयम् । लयनम् लानम् । लायः लयः । लेता लाता । लीनः । लातव्यम् लेतव्यम् । लीतिः । लातुम् लेतुम् । लीत्वा । संलाय संलीय । लेयम् । लीयमानः । लेष्यमाणः लास्यमानः ।

लुठ लोठे तुदा॰ पर॰ अक॰ सेट् कुटादि ।

कर्त्तरि लुठति । अलुठीत् । लुलोठ लुलुठिथ । लुठिता । लुठिष्यति । भावे लुठ्यते अलोठि । णिचि लोठयति-ते अलूलुठत्-त अलुलोठत्-त ।

कृत्सु । लुठनीयम् । लुठनम् । लोठः । लोठकः । लोठी । लुठिता । लुठितः । लुठितव्यम् । लुठिः । लुठितुम् । लुठित्वा । संलुठ्य । लोठ्यम् । लुठन् लुठिष्यन् ।

लुप छेदने तुदा॰ उभ॰ सक॰ अनिट् मुचादि ।

कर्त्तरि लुम्पति-ते लुम्पेत्-त । अलुपत् अलुप्त । लुलोप लुलोपिथ लुलुपिव । लोप्तासि से । लुप्यात् लुप्सीष्ट । लोप्स्यति-ते । कर्म्मणि लुप्यते । अलोपि । णिचि लोपयति-ते अलूलुपत्-त अलुलोपत् त ।

कृत्सु लोपनीयम् । लोपनम् । लोपः । लोपकः । लोपी । लोप्ता । लुप्तः लोप्तव्यम् । लुप्तिः ।

तृन् लोप्तम्। लुप्त्वा। संलुप्य। लोप्यम्। लुम्पन् लुम्पमानः लुप्यमानः। लोप्-स्यन् स्यमानः।

लुप प्राप्तौ अदर्शने नाशे च अक० दिवा० पर० सक० सेट्।

कर्त्तरि लुप्यति। अलोपीत्। लुलोप। लोपिता। भावे लुप्यते अलोपि। णिचि तौदादिकवत्। कृत्सु लोपिता लोपितव्यम् लोपितुम्। लोपित्वा लुप्त्वा। लुप्यम्। लोपिष्यन्। इति भेदः। अन्यत् तौदादिकलुपवत्। क्विप् लुप्।

लुभ सातिशयेच्छायां दिवा० पर० सक० सेट्।

कर्त्तरि लुभ्यति। लुभ्येत। अलुभत् वोपदेवमते अलोभीदित्यपि। लुलोभ। लोभिता लोब्धा। कृत्सु। लोभनीयम्। लोभनम्। लोभः। लोभी। लोभिता लोब्धा। लुब्धः। लोभितव्यम् लोब्धव्यम्। लुब्धिः। लोभितुम् लोब्धुम्। लुभित्वा लुब्ध्वा। लोभ्यम्। लुभ्यन् लुभ्यमानः।

लू छेदने क्र्यादि० उभय० सक० सेट् स्वादि०।

कर्त्तरि लुनाति लुनीतः लुनन्ति लुनीते। लुनीयात् लुनीत। लुनातु लुनीताम् लुनन्तु लुनीहि लुनीताम्। अलुनात् अलुनीत। अलावीत् अलविष्ट। लुलाव लुलुवतुः लुलुवे। लविता लूयात् लविषीष्ट। लविष्यति-ते। कर्म्मणि लूयते अलावि। णिचि लावयति-ते अलीलवत्-त।

कृत्सु । लवनीयम् । लवनम् । रसे लवणम् । लवः लावः । लावकः । लवी । लविता । लूनः । लूनिः । लवितव्यम् । लवितुम् । लवित्वा । संलूय । लव्यम् लाव्यम् । लुनन् लुनानः लूयमानः । लविष्यन् ष्यमाणः ।

लोक दर्शने भ्वा० आत्म० सक० सेट् ।

कर्त्तरि लोकते । अलोकिष्ट ॥ लुलोके । कर्म्मणि लोक्यते । अलोकि । णिचि लोकयति-ते अलुलोकत्-त ।

कृत्सु । लोकनीयम् लोकनम् । लोकः । लोककः । लोकी । लोकिता । लोकितः । लोका । लोकितव्यम् । लोकितुम् । लोकित्वा । संलोक्य । लोक्यम् । लोकमानः लोक्यमानः । लोकिष्यन् ष्यमाणः ।

लोक दीपने चुरा० उभय० सक० सेट् ।

कर्त्तरि लोकयति-ते । अलुलुकत्-त । लोकयितासि-से । कर्म्मणि लोक्यते अलोकि ।

कृत्सु लोकयिता लोकयितव्यम् लोकयित्वा लोकयन् मानः लोकयिष्यन् ष्यमाणः इति भेदः अन्यत् भ्वादिगणीयलोकवत् ।

लोच दर्शने भ्वादि॰ आत्म॰ सक॰ सेट्।

कर्त्तरि लोचते। सर्व्वं भ्वादिगणीयलोकवत् कस्थाने चकारमात्रभेदः।

लोच आलोचने चुरा॰ उभ॰ सक॰ सेट्।

कर्त्तरि लोचयति-ते। सर्व्वं चुरादिगणीय लोकवत् ककारस्थाने चकारमात्रभेदः।

वच व्यक्तायां वाचि अदा॰ पर॰ ब्रुवादेशस्तु उभ॰ अनिट्।

कर्त्तरि वक्ति वक्तः। अन्तिप्रयोगो नास्ति। वक्षि वक्थः वच्मि वच्वः वच्मः। वच्यात्। वक्तु। अवक् ग्। अवोचत्। ब्रुवादेशस्य अवोचत्-त। उवाच ऊचतुः उवचिथ उवक्थ ऊचिव ऊचे। वक्ता सि-से। उच्यात् वक्षीष्ट। वक्ष्यति ते। कर्म्मणि उच्यते। अवाचि। णिचि वाचयति ते अवीवचत् त। सनि विवक्षति ते। यङि वावच्यते।

कृत्सु वचनीयम्। वचनम्। वाकः। वाचकः घञि वचः। वाची। वक्ता। उक्तः। उक्तिः। वक्तुम्। वक्तव्यम्। उक्त्वा। निरुच्य। वाच्यम् पदसमुदाये वाक्यम्। वचन् उच्यमानः। वक्ष्यन् निरुक्तिः। वक्ष्यमाणः। क्विप् वाक्। सनः विवक्षा विवक्षुः विवक्षन् विवक्षितः। निर् निरुक्ती निर्वक्ति निर्वचनम्। अनु-अनुवादे अनुवक्ति अनूक्तः अनुवाकः। कान अनूचानः। प्रति-प्रतिवाक्ये प्रतिवक्ति प्रत्युक्तः प्रत्युक्तिः प्रतिवाक्यम्।

वच सन्देशे चुरा० उभ० सक० सेट् ।

कर्त्तरि वाचयति ते । अवीवचत् त । कर्म्मणि वाच्यते । अवाचि अवाचयिषाताम् अवाचिषाताम्

कृत्सु वाचनीयम् । वाचनम् । वाचकः । वाची । वाचयिता । वाचितः । वाचना । वाचयितुम् । वाचयितव्यः । वाचयित्वा । प्रवाच्य । वाचयन् मानः । वाच्यमानः । वाचयिष्यन् ष्यमाणः कर्म्मणि वाचिष्यमाणश्च ।

वद वाचि भ्वा० पर० सक० सेट् यजादि ।

कर्त्तरि वदति वदतः वदन्ति । वदेत् । वदतु । अवदत् । अवादीत् । उवाद ऊदतुः । वदिता । उद्यात् । वदिष्यति । कर्मणि उद्यते । अवादि । णिचि वादयति ते अवीवदद् त । सनि विवदिषति यङि वावद्यते ।

कृत्सु । वदनीयम् । वदनम् । वादः । प्रियंवदः वशंवदः कद्वदः । वादकः । वादी । वदिता । उदितः । उक्तिः । वदितुम् । वदितव्यम् । उदित्वा । अनूद्य । वाद्यम् । अवद्यम् । वदन् उद्यमानः । वदिष्यन् ष्यमाणः । यङः ऊक वावदूकः । णिच-इत्त वादितम् ।

वन्च वञ्चने चुरा० आत्म० सक० सेट् इदित् ।

कर्त्तरि वञ्चयते । अववञ्चत । कर्म्मणि वञ्च्यते अवञ्चि ।

कृत्सु वञ्चनीयम्। वञ्चनम्। वञ्चकः। वञ्ची। वञ्चयिता। वञ्चितः। वञ्चना वञ्चयितुम्। वञ्चयितव्यम्। वञ्चयित्वा। प्रवञ्च्य। वञ्च्यम्। वञ्चयमानः वञ्च्यमानः। वञ्चयिष्यमाणः। कर्म्मणि वञ्चिष्यमाणश्च।

वद नमने स्तवने च भ्वा॰ आत्म॰ इदित् सक॰ सेट्।

कर्त्तरि वन्दते। वन्देत। वन्दताम्। अवन्दत। अवन्दिष्ट। ववन्दे। वन्द्यात्। कर्मणि वन्द्यते। अवन्दि। णिचि वन्दयति ते अववन्दत् त।

कृत्सु। वन्दनीयम् वन्दनम्। वन्दकः। वन्दः। वन्दी। वन्दिता। वन्दितः। क्तिन् नास्ति युच् वन्दना। वन्दितुम्। वन्दितव्यम्। वन्दित्वा। अभिवन्द्य। वन्द्यम्। वन्दमानः। वन्दिष्यमाणः। आरु वन्दारुः।

वप मुण्डने तन्तुवीजयोः सन्ताने च भ्वा॰ उभ॰ सक॰ अनिट् यजादि।

कर्त्तरि वपति ते। वपेत् त। वपतु ताम्। अवपत् त। अवाप्सीत् अवप्त। उवाप ऊपतुः उवपिथ उवप्थ ऊपिव ऊपे। वप्ता-सि से। उप्यात् वप्सीष्ट। वप्स्यति ते। कर्मणि उप्यते। अवापि। णिचि वापयति ते अवीवपत् त। प्रणिवपति।

कृत्सु। वपनीयम्। वपनम्। वापः। वापकः। वापी। वप्ता। उप्तः। उप्तिः। वप्तुम्। वप्तव्यम्।

उप्त्वा । निरुप्य । वपन् मानः उप्यमानः । वप्स्यन् वप्स्यमानः । निर्-दाने निर्वपति निर्वापः ।

वम उद्गिरणे भ्वा० उभ० सक० सेट् फणादि ।

कर्त्तरि वमति ते । वमेत् त । वमतु ताम् । अवमत् त । अवमीत् अवमिष्ट । ववाम वेमतुः-ववमतुः वेमे ववमे । कर्मणि वम्यते । अवामि । णिचि वमयति-ते अवीवमत्-त । यङि वंवम्यते । लुक् वमनीयम् । वमनम् । वामः । वामकः । वामी । वमिता । वान्तः । वान्तिः । वमितव्यम् । वमितुम् । वमित्वा-वान्त्वा । अभिवम्य । वम्यम् । वमन् वममानः वम्यमानः । वमिष्यन् ष्यमाणः । अथु वमथुः ।

वर्ण स्तुतौ, विस्तारे, शुक्लतादिकरणे, उपयोगे, दीपने च अदन्त चुरा० उभ० सक० सेट् ।

कर्त्तरि वर्णयति ते । अववर्णत् त । कर्मणि । वर्ण्यते अवर्णि । अवर्णिषाताम् अवर्णयिषाताम् । कृत्सु । वर्णनीयम् । वर्णनम् । वर्णः । वर्णकः । वर्णी । वर्णयिता । वर्णितः । वर्णना । वर्णयितुम् । वर्णयितव्यम् । वर्णयित्वा संवर्ण्य । वर्ण्यम् । वर्णयन् मानः वर्ण्यमानः । वर्णयिष्यन् ष्यमाणः ।

वर्द्ध पूरणे, छेदने च चुरा० उभ० सक० सेट् ।

कर्त्तरि । वर्द्धयति-ते । अववर्द्धत्-त । कर्मणि वर्द्धयते अवर्द्धि ।

कृत्सु । वर्द्धनीयम् । वर्द्धनम् । वर्द्धः । वर्द्धकः । वर्द्धी । वर्द्धिता । वर्द्धितः । वर्द्धना । वर्द्धयितुम् ।

वर्द्धितव्यम्। वर्द्धयित्वा। प्रवर्द्ध्य। वर्द्धम्। वर्द्धयन् मानः वर्द्धमानः। वर्द्धयिष्यन् ष्यमाणः कर्म्मणि वर्द्धिष्यमाणश्च।

वश इच्छायाम् अदा० पर० सक० सेट्।

कर्त्तरि वष्टि उष्टः उशन्ति वक्षि उष्ठः उष्ठ वश्मि उश्वः उश्मः। उश्यात्। वष्टु उष्टाम् उशन्तु उड्ढि। उष्टम् उष्ट वशानि। अवट् ड्। अवाशीत् अवशीत्। उवाश ऊशतुः। वशिता। उश्यात्। वशिष्यति। कर्म्मणि उश्यते। अवाशि। णिचि वाशयति-ते। अवीवशत्-त।

कृत्सु वशनीयम्। वशनम्। वाशः। वाशकः। वाशी। वशिता। उशितः। उष्टिः। वशितुम्। वशितव्यम्। उशित्वा। निवश्य। वाश्यम्। उशन् उश्यमानः। वशिष्यन् ष्यमाणः।

वस निवासे भ्वा० पर० अक० अनिट् यजादि।

कर्त्तरि वसति। वसेत्। वसतु। अवसत्। अवात्सीत् अवात्ताम् अवात्सुः अवात्सीः अवात्तम् अवात्त अवात्सम् अवात्स्व। उवास ऊषतुः उवसिथ उवस्थ उषिव। वसिता वस्ता। उष्यात्। वत्स्यति। भावे उष्यते अवासि। णिचि वासयति-ते अवीवसत्-त।

कृत्सु वसनीयम्। वसनम्। वासः। वासकः। वासी। वसिता वस्ता। उषितः। उष्टिः। वसितुम् वस्तुम्। वसितव्यम् वस्तव्यम्। उषित्वा। उपोष्य। वास्यम्। वसु। ऊषिवान्।

वसन् अनूष्यमाणः । वत्स्यन् अनुवत्स्यमानः । उप—भोजनाभावे उपवसति उपोषितः । ल्युटि उपोषणमित्येके । अनु-अधि-उप-आङ्-सक० अनुवसति अधिवसति उपवसति आवसति वा गृहम् । प्र-प्रवासे (विदेशगमने) प्रवसति प्रोषितः प्रोषिवान् ।

वस आच्छादने अदा० आत्म० सक० सेट् ।

कर्त्तरि वस्ते वसाते वसते वस्से वसाथे वद्ध्वे वसे वस्वहे वस्महे । वसीत वसीयाताम् वसीरन् । वस्ताम् । अवस्त । अवसिष्ट । ववसे । वसितासे । वसिषीष्ट । वसिष्यते । कर्म्मणि वस्यते अवासि । णिचि वासयति-ते । अवीवसत्-त ।

कृत्सु । वसनीयम् । वसनम् । वासः । णिच्-असि वासः वाससी । वासकः । वासी । वसिता । वसितः । वस्तिः । वसितुम् । वसितव्यम् । वसित्वा । प्रवास्य । वास्यम् । वसानः वस्यमानः । वसिष्यमाणः ।

वह प्रापणे भ्वा० उभ० द्विक० अनिट् यजादि ।

कर्त्तरि वहति-ते । वहेत्-त । वहतु ताम् । अवहत्-त । अवाक्षीत् अवाढाम् अवाक्षुः अवाक्षीः अवाढम् अवाढ अवाक्षम् अवाक्ष्व अवोढ अवक्षाताम् अवक्षत अवोढाः अवक्षाथाम् अवोढ्वम् अवक्षि अवक्ष्वहि । उवाह ऊहतुः उवहिथ उवोढ ऊहिव ऊहे ऊहिषे । वोढासि से

उह्यात् वक्षीष्ट । वक्ष्यति ते । कर्म्मणि उह्यते अवाहि णिचि वाहयति ते· अवीवहत् त । कृत्सु । वहनीयम् । वहनम् । वाहः । प्रवहः निवहः आवहः । वाहकः । वाही । इत वहितः । वोढा । ऊढः । ऊढिः । वोढव्यम् । वोढुम् । ऊढ्वा । प्रोह्य ! वह्यम् वाह्यम् । वहन् वहमानः उह्यमानः । वक्ष्यन् क्ष्यमाणः । उद् विवाहे उद्वहति उदूढः ।

वा गमने हिंसने च अदा० पर० सक० अनिट् ।

कर्त्तरि वाति । वायात् । वातु । अवात् अवाताम् अवुः-अवान् । अवासीत् अवासिष्टाम् अवासिषुः । ववौ ववतुः वविथ-ववाथ ववि । वातासि ॥ वायात् । वास्यति । कर्म्मणि वायते । अवायि । णिचि वापयति-ते अवीवपत्-त । सनि विवासति ।

कृत्सु । वानीयम् । वानम् । वायः । वायकः । वायी । वाता । वातः । वातिः । वातुम् । वातव्यम् । वात्वा । प्रवाय । वेयम् । वान् वायमानः । वास्यन् स्यमानः ।

वाछ कामे भ्वा० पर० सक० सेट् इदित् ।

कर्त्तरि वाञ्छति । अवाञ्छीत् । ववाञ्छ । कर्म्मणि वाञ्छ्यते । अवाञ्छि । णिचि वाञ्छयति-ते अववाञ्छत्-त ।

कृत्सु । वाञ्छनीयम् । वाञ्छनम् ॥ वाञ्छकः । वाञ्छी । वाञ्छिता । वाञ्छितः । वाञ्छा । वाञ्छि-

तुम्। वाञ्छितव्यम्। वाञ्छित्वा। प्रवाञ्छ्य। वाञ्छन् वाञ्छ्यमानः। वाञ्छिष्यन् ष्यमाणः।

विच पृथक्करणे रुधा॰ सक॰ उभय॰ अनिट्।

कर्त्तरि विनक्ति विङ्क्तः विञ्चन्ति विनक्षि विङ्क्थ विनच्मि विञ्चः विङ्क्ते विञ्चाते विञ्चते विङ्क्षे विङ्ग्ध्वे विञ्चे। विञ्च्यात् विञ्चीत। विनक्तु विङ्ग्धि विनचानि विङ्क्ताम्। अविनक् ग् अविङ्क्त। अविचत् अवैक्षीत् अविक्त। विवेच विवेचिथ विविचिव विविचे। वेक्ता वि-से। विच्यात् विक्षीष्ट। वेक्ष्यति। कर्म्मणि विच्यते। अवेचि। णिचि वेचयति-ते अवीविचत्-त। सनि विविक्षति।

कृत्सु वेचनीयम्। वेचनम्। वेकः। वेचकः। विचन् विवेकी। विक्ता। विक्तः। विक्तिः। वेक्तव्यम्। वेक्तुम्। विक्त्वा। विविच्य। वेच्यम्। विञ्चन् विञ्चानः विच्यमानः। वेक्ष्यन् ष्यमाणः।

वि-विवेके विविनक्ति विवेकः विवेचनम् विविक्तः।

विज भये कम्पे च तु॰ आत्म॰ अक॰ सेट्।

कर्त्तरि विजते। विजेत। विजताम्। अविजत। अविजिष्ट। विविजे। भावे विज्यते। अवेजि। णिचि वेजयति-ते अवीविजत्-त।

कृत्सु । वेजनीयम् । वेजनम् । वेगः उद्वेगः । वेजकः । वेजी । विजिता । विग्नः । विक्तिः । विजितुम् । विजितव्यम् । विजित्वा । उद्विज्य । वेग्यम् । विजमानः । विजिष्यमाणः ।

विद भावे दिवा० आत्म० अक० अनिट् ।

कर्त्तरि विद्यते । विद्येत । विद्यताम् । अविद्यत । अवित्त । विवेदे । वेत्तासे । वित्सीष्ट । वेत्स्यते । भावे विद्यते । अवेदि । णिचि वेदयति-ते । अवीविदत्-त । सनि विवित्सते । कृत्सु वेदनीयम् । वेदनम् । वेदः । वेदकः । वेदी । वेत्ता । वित्तः । वित्तिः । वेत्तव्यम् । वेत्तुम् । वित्त्वा । संविद्य । वेद्यम् विद्यमानः । वेत्स्यमानः ।

विद ज्ञाने अदा० पर० सक० सेट् ।

कर्त्तरि वेद-वेत्ति विदतुः-वित्तः विदुः-विदन्ति वेत्थ-वेत्सि विदथुः-वित्थः विद वित्थ वेद वेद्मि विद्व विद्वः विद्म विद्मः । विद्यात् । वेत्तु-विदाङ्करोतु वित्ताम् विदाङ्कुरुताम् विदन्तु विदाङ्कुर्वन्तु विद्धि विदाङ्कुरु वित्तम् विदाङ्कुरुतम् वित्त विदाङ्कुरुत वेदानि विदाङ्करवाणि वेदाव विदाङ्करवाव । कामपक्षे आत्मनेपदस्य । विदाङ्कुरुताम् विदाङ्कुर्वाताम् विदाङ्कुर्वताम् विदाङ्कुरुष्व वेदाङ्कुर्वाथाम् विदाङ्कुरुध्वम् विदाङ्करवै विदाङ्करवावहै । अवेत्-द् अवेः अवित्ताम् अविदुः-अविदन् अवेत् । अवेदीत् अवेदिष्टाम् अवेदिषुः । विवेद विदा-

अभूव विदामास विदाञ्चकार विवेद। विदिता। विद्यात्। वेदिष्यति। कर्म्मणि। विद्यते अवेदि णिचि वेदयति-ते अवीविदत्-त। सनि विविदिषति।

कृत्सु वेदनीयम्। वेदनम्। वेदः। असि वेदाः जातवेदाः। वेदकः। वेदी। वेदिता औणादिके तृचि तु वेत्ता। विदितः। वित्तिः। वेदितव्यम्। वेदितुम्। विदित्वा। संविद्य। वेद्यम्। विदन् विद्यमानः। वेदिष्यन् ष्यमाणः। सम् आत्म० अक० संवित्ते संविदाते संविदते संविद्रते।

विद लाभे [6] तुदा० उभ० सक० अनिट् मुचादि०।

कर्त्तरि विन्दति-ते। विन्देत्-त। विन्दतु-ताम्। अविन्दत्-त। अविदत् अवित्त। विवेद विवेदिथ विविदिव विविदे। वेत्ता सि-से। विद्यात् वित्सीष्ट। वेत्स्यति। कर्म्मणि विद्यते अवेदि। णिचि वेदयति-ते। अवीविदत्-त। सनि विवित्सति-ते।

कृत्सु दैवादिकवत्। वित्ता विन्नः वेत्तुम्। वेत्तव्यम् वित्त्वा विन्दन् विन्दमान वेत्स्यन् ष्यमाण इति भेदः। परि परिवेदने परिविन्दति परिवेत्ता परिवित्तः।

विश उपवेशने [6] तु० पर० अक० अनिट्।

कर्त्तरि विशति। विशेत्। विशताम्। अविशत्। अविक्षत्। विवेश। वेष्टा। विश्यात्। वेक्ष्यति। भावे विश्यते। अवेशि। णिचि वेशयति ते अवीविशत् त। सनि विविक्षति।

कृत्सु वेशनीयम्। वेशनम्। वेशः। वेशकः। वेशी। वेष्टा। विष्टः। त्रिष्टिः। वेष्टव्यम्। वेष्टुम्। विष्ट्वा। उपविश्य। वेश्यम्। विशन्। वेक्ष्यन्। नि-आत्म० निवेशते। अभिनि-बुद्धिप्रवेशने सक० धर्म्ममभिनिवेशते। अन्यतार्थे अक०। सम् शयने संविशति। निर् भृतौ भोगे च निर्विशति। उप-स्थितौ अक० उपविशति। परि-परिवेशने। परिविशति।

वृ भजने क्र्या० आत्म० सक० सेट्।

कर्त्तरि वृणीते-वृणाते वृणते। वृणीत। वृणीताम्। अवृणीत। अवरिष्ट अवरीष्ट अवृत। वव्रे वव्रिषे। वरीतासे वरितासे। वरिषीष्ट वृषीष्ट। वरीष्यते वरिष्यते। कर्मणि व्रियते। अवारि अवारिषाताम् अवरीषाताम् अवरिषाताम् अवृषाताम्। णिचि वारयति ते अवीवरत् त। सनि विवरिषते विवरीषते वुवूर्षते।

कृत्सु वरणीयम्। वरणम्। वारः संवारः विवारः नीवारः। वरः। वारकः। वारी। वरीता-वरिता। वृतः। वृतिः। वरीतव्यम् वरितव्यम्। वरीतुम् वरितुम्। वृत्वा। प्रवृत्य। वार्य्यम्। वृणानः व्रियमाणः। वरीष्यमाणः वरिष्यमाणः कर्मणि वारिष्यमाणश्च। एण्य वरेण्यः।

वृ वरणे स्वा० उभ० सक० सेट्।

कर्त्तरि वृणोति वृणुतः वृण्वन्ति वृणोषि वृणोमि वृण्वः वृणुवः वृणुते वृण्वाते वृण्वते। वृणुयात्

वृण्वीत। वृणोतु वृणुताम्। अवृणोत् अवृणुत। अवारीत् अवारिष्टाम् अवारिषुः अवरीष्ट अवरिष्ट अवृत। ववार ववरिथ वव्रे वव्रिषे। वरीतासि-से वरितासि-से। व्रियात् वरिषीष्ट वृषीष्ट। वरिष्यति-ते वरीष्यति-ते। कर्म्मणि व्रियते। अवारि।

क्तत्सु शतरि वृण्वन् वृण्वानः। स्यत वरीष्यन् वरिष्यन् एवं स्यमाने इतिभेदः अन्यत् क्र्यादिगणीयवत्। सम् सङ्कोचने। संवृणुते। वि-विस्तारकरणे विवृणोति विवृण्वती मैत्रसुतापि भावमिति कुमारः।

वृत वर्त्तने भ्वा० आत्म० अक० सेट् वृतादि।

कर्त्तरि वर्त्तते। वर्त्तेत। वर्त्तताम्। अवर्त्तत। लुङि लृटि लृङि च उभ०। अवृतत् अवर्त्तिष्ट। ववृते ववृतिषे। वर्त्तितासे। वर्त्स्यति वर्त्तिष्यते। अवर्त्स्यत् अवर्त्तिष्यत। भावे वृत्यते अवर्त्ति। णिचि। वर्त्तयति-ते अवीवृतत्-त अववर्त्तत्-त। सनि विवर्त्तिषते।

क्तत्सु वर्त्तनीयम्। वर्त्तनम्। वर्त्तः। वर्त्तकः। वर्त्ती। वर्त्तिता। वृत्तः। वृत्तिः। वर्त्तितव्यम्। वर्त्तितुम्। वृत्त्वा। प्रवृत्य। वृत्यम्। वर्त्तमानः। वर्त्स्यन् वर्त्तिष्यमाणः। वृष्णु वर्त्तिष्णुः सनः विवृत्सा विवर्त्तिषा। विवृत्सुः विवर्त्तिषुः। विवर्त्तिषमाणः।

वृध वर्द्धने भ्वा० आत्म० अक० सेट् वृतादि।

कर्त्तरि वर्द्धते। लुङि लृटि लृङि च उभ०। अवृधत् अवर्द्धिष्ट। ववृधे। वर्द्धिताहे। वर्द्धिषीष्ट। वर्त्स्यति वर्द्धिष्यते। अवर्त्स्यत् अवर्द्धिष्यत। भावे वृध्यते अवर्द्धि। णिचि वर्द्धयति-ते अवीवृधत्-त अववर्द्धत्-त। सनि विवर्द्धिषते।

कृत्सु वर्द्धनीयम्। वर्द्धनम्। वर्द्धः। वर्द्धकः। वर्द्धी। वृधुः वर्द्धिष्णुः। वर्द्धिता। वृद्धः। वृद्धिः। वर्द्धितुम् वर्द्धितव्यम्। वृद्धा। संवृध्य॥ वृध्यम्। वर्द्धमानः। वर्त्स्यन् वर्द्धिष्यमाणः। सनि विवृत्सा विवर्द्धिषा। विवृत्सुः विवर्द्धिषुः। विवर्द्धिषमाणः।

वृह करिगर्ज्जने वृंहौ च भ्वा० पर० अक० सेट् इदित्।

कर्त्तरि वृंहति। वृंहेत्। अवृंहीत्। भावे वृंह्यते। अवृंहि। णिचि वृंहयति ते। अववृंहत्-त

कृत्सु। वृंहणीयम्। वृंहणम्। वृंहः। वृंहकः। वृंही। वृंहिता। वृंहितम्। वृंहा। वृंहितव्यम्। वृंहितुम्। वृंहित्वा। संवृंह्य। वृंह्यम्। वृंहन्। वृंहिष्यन्। सनि नि० ववृंहान्। पवर्गीयादिवदुक्तिस्तु प्रामादिकी।

वृ वृतौ क्र्यां० उभ० सक० सेट् प्वादि।

कर्त्तरि वृणाति वृणीतः वृणीते। वृणीयात् वृणीत। वृणातु वृणीताम्। अवृणात् अवृणीत।

अवारीत् अवरिष्ट अवरीष्ट अवृष्ट । ववार ववरिथ ववरे ववरिषे । वरीतासि-से वरिता सि-से । वरिषीष्ट वृर्षीष्ट । वरीष्यति-ते वरिष्यति ते । कर्म्मणि वूर्य्यते अवारि अवारिषाताम् अवरीषाताम् अवरिषाताम् अवृर्षाताम् । णिचि वारयति-ते अवीवरत्-त । सनि विवरीषति ते विवरिषति-ते वुवूर्षति ते ।

कृत्सु वरणीयम् ! वरणम् । वरः । वारकः । वारी । वरीता वरिता । वृतः । वृतिः । वरीतुम् वरितुम् । वरीतव्यम् वरितव्यम् । वृत्वा । संवूर्य्य । वार्य्यम् । वृणन् वृणानः वूर्य्यमाणः । वरीष्यन् ष्यमाणः वरिष्यन् ष्यमाणः कर्म्मणि वारिष्यमाणश्च ।

वे तन्तुसन्ताने भ्वा० उभ० अनिट् यजादि ।

कर्त्तरि वयति ते । वयेत्-त । वयतु ताम् । अवयत्-त । अवासीत् अवास्त । उवाय ऊवतुः उवयिथ उविथ उवाथ ऊवे । वा-सि से । ऊयात् वासीष्ट । वास्यति-ते । कर्म्मणि ऊयते औयत । अवायि ॥ अवायिषाताम् अवासाताम् । णिचि वापयति ते अवीवपत्-त ।

कृत्सु वानीयम् । वानम् । वायः । तन्तुवायः । वायकः । वायी । वाता । ऊतः । ऊतिः । वातव्यम् । वातुम् । ऊत्वा । समूय । वेयम् । वय-न् मानः ऊयमानः । वास्य-न् स्यमानः । कर्म्मणि वायिष्यमाणश्च ।

वेप चलने भ्वा॰ आत्म॰ अक॰ सेट् ।

कर्त्तरि वेपते । वेपेत । वेपताम् । अवेपत । अवेपिष्ट । भावे वेप्यते । अवेपि । णिचि पर॰ वेपयति अववेपत् ।

कृत्सु वेपनीयम् प्रवेपनीयम् प्रवेपणीयम् । प्रवपनं प्रवपणम् । वेपः । वेपकः । वेपी । वेपिता । वेपितः । वेपा । वेपितव्यम् । वेपितुम् । वेपित्वा । संवेप्य । वेप्यम् । वेपमानः । वेपिष्यमाणः । अथु वेपथुः ।

वेष्ट वेष्टने भ्वा॰ आत्म॰ सक॰ सेट् ।

कर्त्तरि वेष्टते । चेष्टवत् सर्वं चकारस्थाने वकारमात्रभेदः । णिचि उभ॰ वेष्टयति ते । अववेष्टत् त अविवेष्टत्-त ।

व्यथ व्यथने दुःखे भ्वा॰ अक॰ आत्म॰ सेट् घटादि ।

कर्त्तरि व्यथते । व्यथेत । व्यथताम् । अव्यथत । अव्यथिष्ट । विव्यथे । भावे । व्यथ्यते । अव्याथि णिचि व्यथयति-ते अविव्यथत्-त ।

कृत्सु व्यथनीयम् । व्यथनम् । व्याथः । व्याथकः । व्याथी । व्यथिता । व्यथितः । व्यथा । व्यथितुम् । व्यथितव्यम् । व्यथित्वा । संव्यथ्य । व्याथ्यम् । व्यथमानः । व्यथिष्यमाणः ।

व्यध ताड़ने दिवा० पर० सक० अनिट् ।

कर्त्तरि विध्यति । विध्येत । विध्यतु । अविध्यत् । अव्यत्सीत् । विव्याध विविधतुः विव्यधिथ-विव्यद्ध । व्यद्धा । विध्यात् । व्यत्स्यति । कर्म्मणि विध्यते । अव्याधि । णिचि व्याधयति ते अविव्यधत्-त ।

कृत्सु व्यधनीयम् । व्यधनम् । व्याधः । ण व्याधः । वेधस्तु नौदिकविधतेरूपम् । व्याधकः । व्याधी । व्यद्धा । विद्धः । विद्धिः । व्यद्धुम् । व्यद्धव्यम् । विद्धा । आविध्य । व्याध्यम् । विध्यन् विध्यमानः । व्यत्स्यन् स्यमानः । क्विप् आवित्-द् मर्म्मावित् द् मर्म्माविधम् ।

व्ये वरणे भ्वा० उभ० सक० अनिट् ।

कर्त्तरि व्ययति-ते । व्ययेत्-त । व्ययतु-ताम् । अव्ययत् त । अव्यासीत् अव्यास्त । विव्यौ विव्यतुः विव्यिथ विव्यिव विव्ये । व्यातासि-से । वीयात् व्यासीष्ट । व्यास्यति-ते । कर्मणि वीयते । अव्यायि । णिचि व्यापयति-ते अविव्यपत् त ।

कृत्सु व्यानीयम् । व्यानम् । व्यायः । व्यायकः । व्यायी । व्याता । वीतः । वीतिः । व्यातव्यम् । व्यातुम् । वीत्वा । संवीय । व्येयम् । व्ययन् मानः वीयमानः । व्यास्यन् स्यमानः कर्मणि व्यायिष्यमाणश्च ।

व्रज गतौ भ्वादि॰ सक॰ पर॰ सेट् ।

कर्त्तरि व्रजति । व्रजेत् । व्रजतु । अव्रजत् । अव्राजीत् । वव्राज । कर्म्मणि व्रज्यते अव्राजि । णिचि व्राजयति-ते अविव्रजत्-त ।

कृत्सु । व्रजनीयम् । व्रजनम् । व्रजः । व्राजः । परिव्राजकः । व्राजी । व्रजिता । व्रजितः । क्यप् व्रज्या । व्रजितव्यम् । व्रजितुम् । व्रजित्वा । प्रव्रज्य । व्राज्यम् । व्रजन् व्रज्यमानः । व्रजिष्यन् ष्यमाणः । परि—सन्न्यासने परिव्रजति । क्विप् परिव्राट् । अनु—अनुगमने अनुव्रजति । अप—अपगमने अपव्रजति ।

व्रश्च छेदने तुदा॰ पर॰ सक॰ वेट् ।

कर्त्तरि वृश्चति । वृश्चेत् । वृश्चतु । अवृश्चत् । अव्रश्चीत् अव्राक्षीत् । वव्रश्च वव्रश्चतुः वव्रश्चिथ वव्रष्ठ वव्रश्चिव वव्रश्च्व । व्रश्चिता व्रष्टा । वृश्च्यात् । व्रश्चिष्यति व्रक्ष्यति । कर्म्मणि वृश्च्यते अव्रश्चि । णिचि व्रश्चयति-ते अववश्चत्-त ।

कृत्सु व्रश्चनीयम् । व्रश्चनम् । ल्यु व्रश्चनः । व्रश्चः । व्रश्चकः । व्रश्ची । व्रश्चिता व्रष्टा । वृक्णः । वृष्टिः । व्रश्चितव्यं व्रष्टव्यम् । व्रश्चितुम् व्रष्टुम् । वृश्चित्वा वृष्ट्वा । संवृश्च्य । व्रश्च्यम् । वृश्चन् वृश्च्यमानः । व्रश्चिष्यन् ष्यमाणः व्र-क्ष्यन् क्ष्यमाणः ।

शक शक्तौ स्वा॰ पर॰ अक॰ अनिट्।

कर्त्तरि शक्नोति शक्नुतः शक्नुवन्ति। शक्नुव। शक्नुयात्। शक्नोतु। अशक्नोत्। अशकत्। शशाक शेकतुः। शक्ता। शक्यात्। शक्ष्यति। भावे शक्यते अशाकि। णिचि शाकयति-ते अशीशकत्-त।

कृत्सु शकनीयम्। शकनम्। शाकः। शक्ता। शक्तः। शक्तिः। शक्तुम्। शक्तव्यम्। शक्त्वा। प्रशक्य। शाक्यम्। शक्नुवन्। शक्ष्यन्।

शक शक्तौ दिवादि॰ उभ॰ अक॰ सेट्।।

कर्त्तरि शक्यति-ते। अशाकीत् अशकीत् अशकिष्ट। शशाक शेके। शकितासि-से। शक्यात् शकिषीष्ट।। शकिष्यति-ते। भावे शक्यते। अशाकि। णिचि शाकयति ते अशीशकत् त।

कृत्सु शकितः। शकिता। शकितव्यम्। शकितुम्। शकित्वा। शक्यन् शक्यमानः शकिष्यन् ष्यमाणः इति भेदः। अन्यत् स्वादिगणीयवत्।

शक त्रासे संन्देहे च भ्वा॰ आत्म॰ त्रासे अक॰ संन्देहे सक॰ सेट् इदित्।

कर्त्तरि शङ्कते। शङ्केत। शङ्कताम्। अशङ्कत अशङ्किष्ट। शशङ्के। कर्म्मणि भावे च। शङ्क्यते। अशङ्कि। णिचि शङ्कयति-ते। अशशङ्कत्-त।

कृत्सु शङ्कनीयम् । शङ्कनम् । शङ्कः । शङ्ककः । आशङ्की । शङ्किता । शङ्कितः । शङ्का । लङ्कापि शङ्काकुलेति नाटकम् । अशक्यशङ्कव्यभिचारहेतुरितिनैषधम् । शङ्कितुम् । शङ्कितव्यम् । शङ्कित्वा । आशङ्क्य । शङ्कम् । शङ्कमानः शङ्क्यमानः । शङ्किष्यमाणः ।

शन्स कथने स्तुतौ च भ्वा० पर० सक० सेट् ।

कर्त्तरि शंसति । शंसेत् । शंसतु । अशंसत् । अशंसीत् । शशंस । शंसिता । शस्यात् । कर्म्मणि शस्यते । अशंसि । णिचि शंसयति ते अशशंसत् त ।

कृत्सु शंसनीयम् । शंसनम् । शंसः । शंसकः । शंसी । शंसिता । शस्तः । शस्तिः । शंसा । शंसितुम् । शंसितव्यम् । शंसित्वा शस्त्वा । प्रशस्य । शंस्यम् । शंसन् । शंस्यमानः । शंसि-ष्यन् ष्यमाणः । आ—आशंसने इष्टार्थप्रार्थने आत्म० आशंसते आशंसुः । प्र—प्रशंसायाम् । प्रशंसति प्रशस्तिः प्रशंसा । अभि—अभिशापे अपवादे च अभिशंसति अभिशस्तः । इदित्त्वं तेन न नलोपः आशंस्यते ।

शप आक्रोशे भ्वा० उभ० सक० अनिट् ।

कर्त्तरि शपति ते । शपेत्-त । अशाप्सीत् अशप्त । शशाप शेपे । शप्ता-सि-से । शप्यात् शप्सीष्ट । कर्म्मणि शप्यते अशापि । णिचि शापयति ते अशीशपत्-त ।

कृत्सु शपनीयम् । शपनम् । शापः । शापकः । शापी । शप्ता । शप्तः । शप्तिः । शप्तव्यम् । शप्तुम् । शप्त्वा । अभिशप्य । शप्यम् । शप-न् मानः शप्यमानः । शप्स्य-न् मानः । शपथे आत्म० शपते ।

शम शान्तौ दिवा० पर० अक० सेट् शमादि ।

कर्त्तरि शाम्यति । शाम्येत् । अशमत् अशमीत् । शशाम शेमिथ । शमिता । शम्यात् । भावे शम्यते । अशमि । णिचि शमयति शामयति । अशीशमत् त अशशामत्-त । कर्म्मणि अशामि अशमि । अशामयिषाताम् अशमयिषाताम् अशामिषाताम् अशमिषाताम् ।

कृत्सु । शमनीयम् । शमनम् । णिचः-ल्यु शमनः । शमः । शमकः । शमी । शमिता । शान्तिः । णिचस्तु शान्तः शमितः । शान्तिः । शमितव्यम् । शमितुम् । शमित्वा शान्त्वा । प्रशम्य । शम्यम् । शाम्यन् । शमिष्यन् । उप-निवृत्तौ उपशाम्यति उपशमः ।

शास शासने अदा० पर० द्विक० सेट् जक्षादि ।

कर्त्तरि । शास्ति शिष्टः शासति शास्सि शिष्ठः शिष्ठ शास्मि शिष्वः । शिष्यात् । शास्तु शिष्टाम् शासतु शाधि । अशात् अशिष्टाम् अशासुः अशाः । अशासत् । शशास । शासिता । कर्म्मणि शिष्यते । अशासि । णिचि शासयति-ते अशशासत्-त ।

कृत्सु । शासनीयम् । शासनम् । शासः । शासकः । शासी । शासिता । शास्ता तु औणादिके तृचि नेट् । शिष्टः । शिष्टिः । शासितव्यम् । शासितुम् । शिष्ट्वा । संशिष्य । शिष्यः शास्यः । शासत् शिष्यमाणः । शासि-ष्यन् ष्यमाणः । आ—आशंसने आशीर्वादप्रार्थने आशास्ते आशासाते आशासते क्विप् आशीः ।

शिक्ष शिक्षणे भ्वा० आत्म० सक० सेट् ।

कर्त्तरि शिक्षते । अशिक्षिष्ट । कर्म्मणि शिक्ष्यते । अशिक्षि । णिचि शिक्षयति-ते अशिशिक्षत्-त । कृत्सु शिक्षणीयम् । शिक्षणम् । शिक्षः । शिक्षकः णिचोऽपि शिक्षकः । शिक्षी । शिक्षिता । शिक्षितः । शिक्षा । शिक्षितव्यम् । शिक्षितुम् । शिक्षित्वा । संशिक्ष्य । शिक्ष्यम् । शिक्षमाणः शिक्ष्यमाणः । शिक्षिष्यमाणः ।

शिष विशेषे रुधा० पर० सक० अनिट् ।

कर्त्तरि शिनष्टि शिंष्टः शिंषति शिनक्षि शिंष्ठः शिंष्ठ शिनष्मि शिंष्वः । शिंष्यात् । शिनष्टु शिंष्टाम् शिंषतु शिण्ढि । अशिनट्-ड् । अशिषत् । शिशेष । शेष्टा । शिष्यात् । शेक्ष्यति । कर्म्मणि शिष्यते । अशेषि । णिचि शेषयति-ते अशीशिषत्-त ।

कृत्सु शेषणीयम् । शेषणम् । शेषः । शेषकः । शेषी । शेष्टा । शिष्टः । शिष्टिः । शेष्टव्यम् । शेष्टुम् । शिष्ट्वा । विशिष्य । शेष्यम् । शिंषन् शिष्यमाणः । शेक्ष्यन् शेक्ष्यमाणः । वि—विशेषकरणे विशिनष्टि विशिष्टः विशेष्यम् विशेषणम् ।

शिष अवशेषे वा चुरा० उभय० पक्षे भ्वा० पर० अक० सेट् ।

कर्त्तरि शेषयति-ते शेषति । अशीशिषत् त अशेषीत् । भावे शिष्यते अशेषि ।

कृत्सु शेषयिता शेषिता । शेषितः शिष्टः । शेषयितव्यम् शेषितव्यम् । शेषयितुम् शेषितुम् । शेषयित्वा शेषित्वा शिषित्वा शिष्ट्वा । शेषय-न् माणः शेषन् शिष्यमाणः । शेषयिष्य-न् माणः शेषि-ष्यन् ष्यमाणः । वि—अतिशायने विशेषयति अव—अवशेषे अवशेषयति अवशेषितः अवशिष्टः । अन्यत् रौधादिकवत् ।

शी शयने अदा० आत्म० अक० सेट् ।

कर्त्तरि शेते शयाते शेरते शेषे । शयीत । शेताम् शयाताम् शेरताम् । अशेत अशेरत । अशयिष्ट । शिश्ये । शयितासे । शयिषीष्ट । भावे शय्यते । अशायि अशायिषाताम् अशयिषाताम् ।

कृत्सु शयनीयम् । शयनम् । शयः उत्तानशयः । शायकः ॥ शायी । शयिता । शयितः । शय्या ।

शयितव्यम् । शयितुम् । शयित्वा । उपशय्य । शेयम् । शयानः । शयिष्यमाणः । अति—अतिक्रमे अतिशेते अतिशयितः । अधिपूर्व्वकः सक० शय्यामधिशेते ।

शुच शोके भ्वा० पर० अक० सेट् । तादावार्द्धधातुके वेडित्यन्ये ।

कर्त्तरि शोचति । शोचेत् । शोचतु । अशोचत् । अशोचीत् । शुशोच । शोचिता शोक्ता । भावे शुच्यते अशोचि णिचि शोचयति-ते अशूशुचत्-त । सनि शुशोचिषति शुशुचिषति ।

कृत्सु शोचनीयम् । शोचनम् । शोकः । शोचकः । शोकी । शोचिता शोक्ता । शोचितः । मतान्तरे शुक्तः । शुक्तिः । शोचितव्यम् शोक्तव्यम् । शोचितुम् शोक्तुम् । शोचित्वा शुचित्वा शुक्त्वा । विशुच्य । शोच्यम् । शोचन् । शोचिष्यन् । अनु—अनुशोके सक० अनुशोचति अनुशोचनम् ।

शुध शौचे शोधने च दिवा० पर० अक० अनिट् ।

कर्त्तरि शुध्यति शुध्येत । अशुधत् । शुशोध । शोद्धा । भावे शुध्यते अशोधि । णिचि शोधयति-ते अशूशुधत्-त ।

कृत्सु शोधनीयम् । शोधनम् । शोधः । शोधकः । शोधी । शोद्धा । शुद्धः । शुद्धिः । शोद्धव्यम् । शोद्धुम् । शुद्ध्वा । विशुध्य । शोध्यम् । शुध्यन् शोत्स्यन् ।

शुभ दीप्तौ भ्वा० आत्म० अक० सेट्।

कर्त्तरि शोभते। अशुभत् अशोभिष्ट। शुशुभे। भावे शुभ्यते अशोभि। णिचि शोभयति-ते। अशूशुभत्-त। सनि सुशोभिषते शुशुभिषते।

कृत्सु शोभनीयम्। शोभनम्। शोभः। शोभकः। शोभी। शोभिता। शोभितः। शोभा। शोभितव्यम्। शोभितुम्। शोभित्वा शुभित्वा। उपशुभ्य। शोभ्यम्। शोभमानः। शोभिष्यमाणः।

श्चुत क्षरणे भ्वा० पर० अक० सेट्।

कर्त्तरि श्चोतति। अश्चुतत् अश्चोतीत्। चुश्चोत। भावे श्चुत्यते। अश्चोति। णिचि श्चोतयति-ते

कृत्सु श्चोतनीयम्। श्चोतनम्। श्चोतः। श्चोतिता। श्चुतितः। श्चुत्तिः। श्चोतितव्यम्। श्चोतितुम्। श्चुत्तित्वा श्चोतित्वा। श्चोत्यम्। श्चोतन्। श्चोतिष्यन्।

श्वस प्राणने अदा० पर० अक० सेट् रुदादि।

कर्त्तरि श्वसिति श्वसितः श्वसन्ति श्वसिषि श्वसिथः श्वसिमि श्वसिवः। श्वस्यात्। श्वसितु श्वसिताम् श्वसन्तु श्वसिहि। अश्वसीत् अश्वसिताम् अश्वसन्। अश्वसीत्। शश्वास। भावे श्वस्यते। अश्वासि। णिचि श्वासयति-ते अशिश्वसत्-त।

कृत्सु श्वसनीयम्। श्वसनम्। श्वसनः। श्वासः। श्वासकः। श्वासी। श्वसिता। श्वसितः। श्वस्तिः। श्वसितव्यम्। श्वसितुम्। श्वसित्वा। विश्वस्य। श्वासम्। श्वसन् श्वसिष्यन्। वि—विश्वासे विश्वसिति विश्वसितः-विश्वस्तः। आ—आश्वासे आश्वसिति आश्वसितः—आश्वस्तः। प्रादिपूर्व्वकाः प्रश्वासनिश्वासाद्यर्थे।

श्रन्थ मोचने क्र्या०[1] पर० सक० सेट्।

कर्त्तरि श्रथ्नाति श्रथ्नीतः श्रथ्नन्ति श्रथ्नासि सर्व्वं ग्रन्थवत् ग्रन्थाने श्रमात्रभेदः।

श्रम तपसि खेदे च दिवा० पर० अक० सेट् शमादि।

कर्त्तरि श्राम्यति। अश्राम्यत्। अश्रमत्—अश्रमीत्। भावे श्रम्यते। अश्रमि वेत्सु व्यश्रमि—व्यश्रामि णिचि श्रमयति-ते अशिश्रमत्-त। वि—विश्रामे विश्राम्यति विश्रमः—विश्रामः। आ—आश्रयकरणे आश्राम्यति आश्रमः।

श्रा विक्लित्तिरूपे पाके अदा०[2] पर० अक० अनिट्।

कर्त्तरि श्राति। अश्रासीत्। शश्रौ। श्राता। भावे श्रायते। अश्रायि। णिचि श्रपयति-ते अशिश्रपत्।

कृत्सु श्राणम्। णिचस्तु श्रपणीयम् श्रपणम्। श्रपयिता। श्रपितः। श्रपणा। श्रपयितव्यम्।

श्रपयितुम्। श्रपयित्वा। श्रप्यम्। श्रपय-न् माणः श्रप्यमाणः। श्रपयि-ष्यन् ष्यमाणः। कर्म्मणि श्रपिष्यमाणश्च।

श्रि सेवने भ्वा॰ उभ॰ सक॰ सेट्।

कर्त्तरि श्रयति-ते। श्रयेत्-त। अशिश्रियत्-त। शिश्राय शिश्रियतुः शिश्रिये। श्रयिता-सि-से। श्रीयात् श्रयिषीष्ट। कर्म्मणि श्रीयते अश्रायि। णिचि श्राययति-ते अशिश्रयत्-त।

कृत्सु श्रयणीयम्। श्रयणम्। श्रयः। श्रायकः। श्रायी। इनि संश्रयी। श्रयिता। श्रितः। श्रितिः। श्रयितव्यम्। श्रयितुम्। श्रयित्वा। आश्रित्य। आश्रेयम्। श्रय-न् माणः श्रीयमाणः। श्रयिष्यन् ष्यमाणः। कर्मणि श्रायिष्यमाणश्च। आ—अवलम्बने आश्रयति-ते आश्रयः आश्रितः। प्र-प्रागल्भ्ये अक॰ प्रश्रयति-प्रश्रयः। उद्-उच्चभवने अक॰ उच्छ्रयति उच्छ्रितः। उच्छ्रयः उच्छ्रायः

श्रु श्रवणे भ्वा॰ पर॰ सक॰ अनिट्।

कर्त्तरि शृणोति शृणुतः शृण्वन्ति शृणोषि शृणोमि शृणुवः—शृण्वः शृणुमः—शृण्मः। शृणुयात्। शृणोतु। अशृणोत्। अश्रौषीत्। शुश्राव शुश्रुवतुः शुश्रविथ—शुश्रोथ शुश्रुव। श्रोता। श्रूयात्। श्रोष्यति। कर्म्मणि श्रूयते अश्रावि। अश्राविषाताम्—अश्रोषाताम्। णिचि श्रावयति ते अशिश्रवत्-त—अशुश्रवत् त। सनि शुश्रूषते। णिचः सनि शुश्रावयिषति-ते।

कृत्सु श्रवणीयम्। श्रवणम्। श्रवः—आश्रावः। श्रावकः। अभि श्रवः। श्रावी। श्रोता। श्रुन्
श्रोत्रम्। श्रुतः। श्रुतिः। श्रोतव्यम्। श्रोतुम्। श्रुत्वा। उपश्रुत्य। श्रव्यम् श्राव्यम्। शृण्वन्।
श्रूयमाणः। श्रो-ष्यन्‌ ष्यमाणः कर्म्मणि श्राविष्यमाणस्र। प्रति-आ-अङ्गीकारे प्रतिशृणोति
आशृणोति। सम् संश्रवे आत्म० अक०। संशृणुते संशृण्वाते संशृण्वते।
श्लाघ विकत्थने (आत्मगुणाविष्करणे) अक० प्रशंसने सक० भ्वा० आत्म० सेट्।
कर्त्तरि श्लाघते। अश्लाघिष्ट। भावे श्लाघ्यते। अश्लाघि। णिचि श्लाघयति-ते। अशश्लाघत्-त।
कृत्सु श्लाघनीयम्। श्लाघनम्। श्लाघकः। श्लाघी। श्लाघिता। श्लाघितः। श्लाघा। श्लाघितव्यम्।
श्लाघितुम्। श्लाघित्वा। श्लाघ्यम्। श्लाघमानः श्लाघ्यमानः। श्लाघिष्यमाणः।
श्लिष आलिङ्गने सम्बन्धमात्रे एकशब्देनोभयार्थबोधने च दिवा० पर० सक० अनिट्।
कर्त्तरि श्लिष्यति। श्लिष्येत्। श्लिष्यतु। अश्लिष्यत्। अश्लिषत्। आलिङ्गनभिन्नार्थे अश्लैक्षीत्। श्लेष्टा
श्लेक्ष्यति। कर्मणि श्लिष्यते अश्लेषि अश्लिक्षाताम्। णिचि श्लेषयति-ते। अशिश्लिषत् त।
कृत्सु श्लेषणीयम् श्लेषणम्। श्लेषः। श्लेषकः। श्लेषी। श्लेष्टा। श्लिष्टः। श्लिष्टिः। श्लेष्टव्यम्।
श्लेष्टुम्। श्लिष्ट्वा। प्रश्लिष्य। श्लेष्यम्। श्लिष्यन् श्लिष्यमाणः। श्लेक्ष्य-न् माणः। प्र-प्रक्षेपे
प्रश्लिष्यति प्रश्लेषः।

### श्वि गतौ सक० वृद्धौ अक० भ्वा० पर० सेट्।

कर्त्तरि श्वयति। श्वयेत्। श्वयतु। अश्वयत्। अशिश्वियत्—अश्वत्—अश्वयीत् अशिश्वियताम्—अश्वताम् अश्वयिष्टाम्। शुशाव—शिश्वाय शुशुवतुः—शिश्वियतुः शुशविथ—शिश्वयिथ। श्वयिता। शूयात्। श्वयिष्यति। कर्म्मणि भावे च शूयते। अश्वायि अश्वायिषाताम्—अश्वयिषाताम्। णिचि श्वाययति अशूशवत् त—अशिश्वयत्-त। यङि शोशूयते शेश्वीयते।

कृत्सु श्वयनीयम्। श्वयनम्। श्वयः। श्वायकः। अथु श्वयथुः। श्वयिता। शूनः। शूतिः। श्वयितव्यम्। श्वयितुम्। श्वयित्वा। उच्छूय। श्वेयम्। श्वयन् शूयमानः। श्वयि-ष्यन् ष्यमाणः कर्म्मणि श्वायिष्य-माणश्च। उदू स्फीतताभवने अक०। उच्छ्वयति उच्छूनः।

### ष्ठिव निरसने दि० पर० सक० सेट्।

कर्त्तरि ष्ठीव्यति। ष्ठीव्येत्। अष्ठेवीत्। टिष्ठेव तिष्ठेव। कर्म्मणि ष्ठीव्यते। अष्ठेवि। णिचि ष्ठेवयति-ते अटिष्ठिवत्-त अतिष्ठिवत्-त।

कृत्सु ष्ठेवनीयम्। ष्ठेवनम्। ष्ठेवः। ष्ठेवकः। ष्ठेवी। ष्ठेविता। ष्ठ्यूतः। ष्ठ्यूतिः। ष्ठेवितुम् ष्ठेवितव्यम्। ष्ठेवित्वा ष्ठ्यूत्वा। ष्ठेव्यम्। ष्ठीव्यन् ष्ठीव्यमानः। ष्ठेवि-ष्यन् ष्यमाणः।

सन्ज सङ्गे भ्वा० पर० अक० अनिट् ।

कर्त्तरि सजति । सजेत् । सजतु । असजत् । असाङ्क्षीत् । ससञ्ज ससजतुः ससञ्जतुः । सङ्क्ता । सज्यात् । सङ्क्ष्यति । भावे सज्यते । असञ्जि । णिचि सञ्जयति-ते असससञ्जत् त् । सनि सिसङ्क्षति । यङि सासज्यते ।

कृत्सु सञ्जनीयम् । सञ्जनम् । सङ्गः । सञ्जकः । घिणुन् सङ्गी । सङ्क्ता । सक्तः । सक्तिः । सङ्क्तव्यम् । सङ्क्तुम् । सक्त्वा । प्रसज्य । सञ्जरम् । सजन् । सङ्क्ष्यन् । प्र—प्रसङ्गे प्रसजति प्रसङ्गः । अनु—अनुषङ्गे अनुषजति अनुषङ्गः । अभि—अभिषङ्गे (पराभवे) अभिषजति

षद विषादे अक० आश्रयकरणे गतौ च सक० तुदा० पर० अनिट् ।

कर्त्तरि सीदति । सीदेत् । सीदतु । असीदत् । असदत् । ससाद सेदतुः सेदिथ—ससत्थ सेदिव । सत्ता । सद्यात् । सत्स्यति कर्म्मणि भावे च सद्यते । असादि । णिचि सादयति-ते असीषदत्-त ।

कृत्सु । सदनीयम् । सदनम् । सादः । सादकः । सादी । सत्ता । सन्नः । सत्तिः । सत्तव्यम् । सत्तुम् । सत्त्वा । प्रसद्य । साद्यम् । सीदन् । सद्यमानः । सत्स्यन् स्यमानः । अपि सदः । मनि सद्म । प्र—प्रसादे प्रसीदति प्रसन्नः प्रसादः । वि—विषादे विषीदति विषण्णः विषादः ।

अव—अवसादे अवसीदति अवसन्नः अवसादः । उद्—उन्मूलने । उत्सीदति उत्सन्नः उत्सादः । आ—नैकट्ये आसीदति आसन्नः आसत्तिः ।

सह शक्तौ भ्वा॰ आत्म॰ सक॰ सेट् ।

कर्त्तरि सहते । सहेत । सहताम् । असहत । असहिष्ट । सेहे । सहितासे सोढासे । सहिषीष्ट । कर्म्मणि सह्यते । असाहि । णिचि साहयति-ते असीषहत्-त । पर्य्यसीषहत् त ।

कृत्सु सहनीयम् । सहनम् । साहः । दुःखसहः भारसहः । दुःषहः । साहकः । साही । इष्णु, सहिष्णुः । सहिता सोढा । सोढः । सोढिः । सहितव्यं सोढव्यम् । सहितुं । सोढुम् । सोढ्वा । प्रसह्य । साह्यम् । सहमानः सह्यमानः । सहिष्यमाणः । उद्—उत्साहे उत्सहते उत्साहः ।

सान्त्व सान्त्वने अद॰ चुरा॰ उभय॰ सक॰ सेट् ।

कर्त्तरि सान्त्वयति-ते । अससान्त्वत्-त । कर्म्मणि सान्त्व्यते । असान्त्वि ।

कृत्सु । सान्त्वनीयम् । सान्त्वनम् । सान्त्वयिता । सान्त्वितः । सान्त्वना । सान्त्वयितव्यम् । सान्त्वयितुम् । सान्त्वयित्वा । प्रसान्त्व्य । सान्त्व्यम् । सान्त्वय-न् मानः सान्त्व्यमानः । सान्त्वयि-ष्यन् ष्यमाणः । कर्मणि सान्त्विष्यमाणश्च ।

सि बन्धने स्वादि० क्र्यादि० च उभ० सक० अनिट् ।

कर्त्तरि सिनोति–सिनाति सिनुतः—सिनीतः सिन्वन्ति – सिनन्ति सिनुते—सिनीते । सिनुयात्—सिनीयात् सिन्वीत–सिनीत । सिनोतु–सिनातु सिनुताम्–सिनीताम् । असिनोत्–असिनात् । असिनुत—असिनीत । असैषीत् असेष्ट । सिषाय सिष्ये । सेता-सि से । सीयात् सेषीष्ट । से ष्य ति-ते । कर्मणि सीयते । असायि । णिचि साययति ते असीषयत् त ।

कृत्सु सयनीयम् । सयनम् साय: । सायकः । सायी । सेता । सितः । ग्रासे सिनः । सितिः । सेतव्यम् । सेतुम् । सित्वा । प्रसित्य । सेयम् । सिन्वन्-सिन्वानः सिनन् सिनानः सीयमानः । से-ष्यन् ष्यमाणः । कर्मणि सायिष्यमाणश्च । वि-विषये विषिणोति–विषिणाति विषयः ।

सिच सेचने तु० उभ० सक० अनिट् मुचादि ।

कर्त्तरि सिञ्चति सिञ्चतः सिञ्चन्ति सिञ्चते । सिञ्चेत् त । सिञ्चतु ताम् । असिञ्चत् त न्यषिञ्चत् । असिचत् असिचत—असिक्त । सिषेच चे निषिषेच चे । सेक्ता-सि से । सिच्यात् सिक्षीष्ट सेक्ष्य ति-ते । कर्मणि सिच्यते । असेचि । णिचि सेचयति ते असीषिचत् त । सनि सिसिक्षति यङि सेसिच्यते ।

कृत्सु सेचनीयम् । सेचनम् । सेकः । सेचकः । सेची । सेक्ता । सिक्तः । सिक्तिः । सेक्तव्यम् ।

सेक्तुम् । सिक्का । निषिच्य । सेच्यम् । सिच्-न् मानः सिच्यमानः । से-च्यन् च्यमाणः । नि— निषेके (गर्भाधाने) निषिञ्चति निषिक्तः निषेकः । अभि-अभिषेके (मन्त्रपूर्वकस्नपनभेदे) अभिषिञ्चति अभिषिक्तः अभिषेकः । उद् गर्व्वे अक० उत्सिञ्चति उत्सिक्तः उत्सेकः ।

सिध सिद्धौ दिवा० पर० अक० अनिट् ।

कर्त्तरि सिध्यति । सिध्येत् । सिध्यतु । असिध्यत् । असैत्सीत् । सिषेध । सेद्धा । सिध्यात् । सेत्स्यति । भावे सिध्यते । असेधि । णिचि साधयति ते असीषधत् त । सनि सिषाधयिषति । क्लतु । सेधनीयम् । सेधनम् । सेधः । सेधकः । सेधी । सेद्धा । सिद्धः । सिद्धिः । सेद्धव्यम् । सेद्धुम् । सिद्धा । संसिध्य । सेध्यम् । सिध्यन् । सेत्स्यन् । णिचस्तु साधनीयम् साधनम् । साधकः । साधयिता । साधितः । साधना । साधयितव्यम् साधयितुम् । साधयित्वा । प्रसाध्य । साध्यम् । साधय-न् मानः साध्यमानः साधयि-ष्यन् ष्यमाणः कर्म्मणि साधिष्यमाणश्च ।

सिध गतौ भ्वादि० पर० सक० सेट् ।

कर्त्तरि सेधति । असेधीत् । कर्म्मणि सिध्यते । असेधि । णिचि सेधयतिते असीषिधत् त । कृत्सु सेधनीयम् । सेधनम् । सेधकः । सेधी । सेधिता । सिद्धः । सिद्धिः । सेधितव्यम् सेधितुम् । सेधित्वा—सिद्धा । निषिध्य । सेध्यम् । सेधन् सिध्यमानः । सेधि-ष्यन् ष्यमाणः । नि-निषेधे

निषेधति निषिद्धः निषेधकः निषेधः । प्रति—निषेधे प्रतिषेधति प्रतिषिद्धः प्रतिषेधः । आ—आसेधे ( राजाज्ञयावरोधे ) आसेधति आसेधः आसिद्धः । उद् उच्चतायाम् उत्सेधति उत्सिद्धः उत्सेधः ।

सिव तन्तुसन्ताने दिवा० पर० सक० सेट् ।

कर्त्तरि सीव्यति परिषीव्यति । सीव्येत् । सीव्यतु । असीव्यत् । असेवीत् । सिषेव । परिषिषेव । सेवितासि । सीव्यात् । कर्म्मणि सीव्यते । असेवि । णिचि सेवयति ते असीषिवत् त । सनि सिसेविषति सिस्यूषति । यङि सेषीव्यते ।

कृत्सु सेवनीयम् सेवनम् । सेवकः । सेवी । सेविता । स्यूतः । स्यूतिः । सेवितव्यम् । सेवितुम् । सेवित्वा स्यूत्वा । आसीव्य । सेव्यम् । सीव्यन् सीव्यमानः । सेवि-ष्यन् ष्यमाणः ।

सु मर्दने,स्नपने,मद्योत्पादने स्वा० उभ० सक० सेट् ।

कर्त्तरि सुनोति सुनुतः सुन्वन्ति सुन्वः—सुनुवः सुनुते सुन्वे । सुनुयात् सुन्वीत । सुनोतु सुनुताम् । असुनोत् असुनुत । असावीत् असविष्ट-असोष्ट । सुषाव सुषुवतुः सुषविथ सुषुव । सवितासि-से-सोतासि-से । सूयात् सविषीष्ट-सोषीष्ट । सविष्यति ते-सोष्यति ते । कर्म्मणि सूयते । असावि । णिचि सावयति ते असीषवत् त ।

क्तृत्सु । सवनीयम् । सवनम् । सवः । सावः । सावकः । सावी । सविता-सोता । सुतः । सुतिः । सवितुम्-सोतुम् । सवितव्यम्-सोतव्यम् । सुत्वा । वनिप् सुत्वा सुत्वानौ । अभिषुत्य । सव्यं साव्यम् । सुन्वन् सुन्वानः सूयमानः । सविष्यन् ष्यमाणः-सोष्यन् माणः कर्मणि साविष्यमाणश्च । अभि अभिषवे अभिषुणोति सोमं निष्पीडयति स्नाति वेत्यर्थः अभिषुतः ।

सू प्रसवे अदा० आत्म० सक० वेट् ।

कर्त्तरि सूते । सुवीत । सूताम् सुवै सुवावहै सुवामहै । असूत । असविष्ट-असोष्ट । सुषुवे सुषुविषे-सुषुषे । सोता-सविता । सविषीष्ट-सोषीष्ट । कर्मणि । सूयते । असावि । णिचि सावयति ते असीषवत् त ।

क्तृत्सु । सवनीयम् । सवनम् । सवः । सावकः । सावी । सविता-सोता । सूनः । सूतिः । सवितव्यम्-सोतव्यम् । सवितुम्-सोतुम् । सूत्वा । प्रसूय । सव्यम् साव्यम् । सुवानः सूयमानः । सविष्यमाणः सोष्यमाणः कर्मणि साविष्यमाणश्च ।

सू प्रसवे दिवा० आत्म० सक० वेट् ।

कर्त्तरि सूयते । असविष्ट-असोष्ट । सुषुवे सुषुविषे-सुषुषे । सोता-सविता । अन्यत् सर्व्वं स्वादिगणीयवत् । निष्ठायां सूनः । सूनवान् । शानचि । सूयमानः इति भेदः ।

सूच सूचने अद०चुरा० उभ० सक० सेट् ।

कर्त्तरि सूचयति ते । असुसूचत् त । कर्मणि सूच्यते असूचि असूचिषाताम् असूचयिषाताम् इतम् । सूचनीयम् । सूचनम् । सूचकः । सूची । सूचयिता । सूचितः । सूचना । सूचयितव्यम् । सूचयितुम् । सूचयित्वा । संसूच्य । सूच्यम् । सूचयन् मानः सूच्यमानः । सूचयिष्यन् ष्यमाणः कर्मणि सूचिष्यमाणश्च ।

सूद आश्रये हनने च चुरा० उभ० अक० सेट् ।

कर्त्तरि सूदयति ते । असूषुदत् त । कर्मणि सूद्यते । असूदि असूदिषाताम् असूदयिषाताम् । इतम् । सूदनीयम् । सूदनम् । मधुसूदनः । वलसूदनः । सूदकः । सूदी । सूदयिता । सूदितः । सूदना । सूदयितव्यम् । सूदयितुम् । सूदयित्वा । संसूद्य । सूद्यम् । सूदयन् मानः सूद्यमानः । सूदयिष्यन् ष्यमाणः कर्मणि सूदिष्यमाणश्च ।

सृ गतौ भ्वा० पर० सक० अनिट् ।

कर्त्तरि सरति । सरेत् । सरतु । असरत् । असरत् असार्षीत् । ससार ससर्थ सस्रिव । सर्त्तासि । स्रियात् । सरिष्यति । कर्मणि स्रियते । असारि । णिचि सारयति ते असीसरत् त । सनि सुसूर्षति ।

कृत्सु सरणीयम् । सरणम् । सरः । अभिसारः । सारकः । सारी । सर्त्ता । सृतः । सृतिः । सर्त्तव्यम् । सर्त्तुम् । सृत्वा । उपसृत्य । सार्य्यम् । सरन्-स्त्रियमाणः । सरि-ष्यन् ष्यमाणः कर्मणि सारिष्यमाणस्व । प्र—प्रसारे प्रसरति प्रसृतः प्रसारः । अप—अपसरणे अपसरति अपसृतः अपसरणम् अपसारः । सम्-संसरणे (स्वादृष्टजन्यदेहधारणे) संसरति संसृतिः संसारः । अनु—अनुसरणे । अनुसरति अनुसृतः अनुसरणम् अनुसारः । वि—विस्तारे विसरति विसृतः विसरणम् विसारः । अभि अभिसारे (कान्तार्थितया संकेतस्थान-गमने । अभिसरति अभिसारिका अभिसारः । उद्—उत्सरणे (दूरीभवने) अक० उत्सरति उत्सृतः उत्सरणम् । णिचः उत्सारयति ते उत्सारितः उत्सारणा ।

सृज विसर्गे तुदा० पर० सक० अनिट् ।

कर्त्तरि सृजति । परिसृजति । सृजेत् । सृजतु । असृजत् । अस्राक्षीत् । ससर्ज ससर्जिथ-सस्रष्ठ ससृजिव । स्रष्टा । सृज्यात् । स्रक्ष्यति । कर्म्मणि सृज्यते असर्जि असृक्षाताम् । णिचि सर्जयति असीसृजत्-त अससर्ज्जत्-त । सनि सिसृक्षति । श्रद्धान्विते कर्त्तरि आत्मनेपदी दैवादिकसृजवत् सृज्यते इत्यादि तनि चिण् च असर्जि ।

कृत्सु सर्जनीयम् । सर्जनम् । सर्गः । घिणन् संसर्गी । स्रष्टा । सृष्टः । सृष्टिः । स्रष्टव्यम् ।

स्रष्टुम्। सृष्ट्वा। विसृज्य। सर्ग्यम् सृज्यम्। सृजन् सृज्यमानः। स्रक्ष्यन् स्रक्ष्यमाणः। सम् संसर्गे दिवादि० अक० संसृज्यते। उद्-दाने सक० उत्सृजति उत्सर्गः उत्सृष्टः।

सृप गतौ भ्वा० पर० सक० अनिट्।

कर्त्तरि सर्पति अभिसर्पति। सर्पेत्। सर्पतु। असर्पत्। अस्राप्सीत्-असार्प्सीत्-असृपत्। ससर्प ससर्पिथ ससृपिव। स्रप्ता-सर्प्ता। सृप्यात्। सर्प्स्यति स्रप्स्यते। कर्मणि सृप्यते। असर्पि असर्पिषाताम्-असृप्साताम्। णिचि सर्पयति-ते असीसृपत्-त-अससर्पत्-त।

कृत्सु सर्पणीयम्। सर्पणम्। सर्पः। सर्पी। स्रप्ता-सर्प्ता। सृप्तः। सृप्तिः। सर्प्तव्यम्-स्रप्तव्यम्। सर्प्तुम्-स्रप्तुम्। सृप्त्वा। संसृप्य। सृप्यम्। सर्पन् सृप्यमाणः। स्रप्स्यन् मानः-सर्प्स्यन् मानः। उद्-उल्लङ्घने उत्सर्पति। अप-अपयाने अपसर्पति। सम्-समन्तात् गतौ व्याप्तौ च संसर्पति।

सो नाशे दिवा० पर० अक० अनिट्।

कर्त्तरि स्यति परिष्यति। स्येत्। स्यतु। अस्यत्। असात् असासीत्। ससौ ससिथ—ससाथ ससिव। साता। सेयात्। सास्यति। भावे सीयते। असायि असायिषाताम्-असासाताम्। णिचि सापयति-ते असीषपत्-त।

कृत्सु। सानीयम्। सानम्। सायः। सायकः। सायी। साता। सितः। सितिः। सातव्यम्।

सातुम् । सित्वा । अवसाय । सेयम् । स्यन् । सास्यन् । अव-समाप्तौ अवस्यति अवसाय: अवसानम् । वि-अव उद्यमे बोधे च सक० व्यवस्यति व्यवसीयते व्यवसाय: । अनु-वि-अव-बुद्धस्य पुनर्बोधे अनुव्यवस्यति अनुव्यवसाय: ।

स्कन्द गतौ शोषणे च भ्वा० पर० सक० अनिट् ।

कर्त्तरि स्कन्दति । स्कन्देत् । स्कन्दतु । अस्कन्दत् । अस्कदत् अस्कांत्सीत् । चस्कन्द । स्कन्तासि । स्कद्यात् । स्कंत्स्यति । कर्म्मणि स्कद्यते । अस्कन्दि । चस्कदे चस्कन्दे । णिचि स्कन्दयति-ते अचस्कन्दत् त ।

कृत्सु स्कन्दनीयम् । स्कन्दनम् । स्कन्दः । स्कन्दी । स्कन्दकः । स्कन्ता । स्कन्नम् । स्कन्तिः । स्कन्तव्यम् । स्कन्तुम् । स्कन्त्वा । आस्कन्द्य । स्कन्द्यम् । स्कन्दन् स्कद्यमानः । आ— आस्कन्दने आप्लुत्य गतौ इदित् तेन न नलोप आत्म० आस्कन्दते आस्कन्दितम् । आचस्कन्दे । आस्कन्द्यते । अव अवरोधने अवस्कन्दति । अवस्कन्दः ।

स्खल चलने भ्वा० पर० सक० सेट् वा घटादि ।

कर्त्तरि स्खलति । अस्खालीत् । चस्खाल । भावे । स्खल्यते । अस्खालि । णिचि स्खलयति ते स्खालयति ते ।

कृत्सु स्खलनीयम् । स्खलनम् । स्खालः । स्खालकः । स्खलिता । स्खलितः । स्खलितव्यम् । स्खलितुम् । स्खलित्वा । स्खलन् स्खलिष्य-न् ष्यमाणः ।

स्तन्भ स्तम्भने सौत्रः पर० सक० सेट् ।

कर्त्तरि स्तभ्नाति—स्तभ्नोति स्तभ्नुतः—स्तभ्नीतः स्तभ्नुवन्ति--स्तभ्नन्ति स्तभ्नीयात्—स्तभ्नुयात् । स्तभ्नातु—स्तभ्नोतु । अस्तभ्नोत्—अस्तभ्नात् । अस्तभत्--अस्तम्भीत् । तस्तम्भ । तस्तम्भतुः—तस्तम्भतुः । स्तम्भिता । स्तभ्यात् । कर्म्मणि स्तभ्यते । अस्तम्भि णिचि स्तम्भयति ते । अतस्तम्भत् त । विष्टभ्नाति व्यष्टभत् । णिचः व्यतस्तम्भत्-त ।

कृत्सु स्तम्भनीयम् । स्तम्भनम् । स्तम्भः । स्तम्भकः । स्तम्भी । स्तम्भिता । स्तब्धः । स्तब्धिः । स्तम्भितव्यम् । स्तम्भितुम् । स्तम्भित्वा स्तब्ध्वा । स्तम्भम् । स्तम्नन् स्तभ्नुवन् । स्तभ्यमानः स्तम्भिष्यन् ष्यमाणः ।

ष्टु स्तवने अदा॰ उभ॰ सक॰ अनिट् । तादावार्द्धधातुके वेडित्यन्ये ।

कर्त्तरि स्तौति स्तवीति । स्तुवीतः । मतान्तरे स्तुतः । अस्तौत् न्यस्तौत् न्यष्टौत् पक्षे ईट् एवं वेः परेश्च । अस्तौषीत् अस्तुत । तुष्टाव । तुष्टविथ-तुष्टोथ तुष्टुविव तुष्टुवे । स्तोतासिसे-स्तवि- 

ताषिषे। स्तूयात् स्तोषीष्ट। स्तोष्यति-ते। कर्म्मणि स्तूयते। अस्तावि णिचि स्तावयति-ते अतुष्टवत्-त।

कृतसु स्तवनीयम्। स्तवनम्। स्तवः। स्तावकः। स्तावी। स्तविता स्तोता। स्तुतः। परिष्टुतः। स्तुतिः। स्तोतव्यम्—स्तवितव्यम्। स्तुत्वा। प्रस्तुत्य। स्तुत्यम्। स्तुवन् स्तूयमानः। स्तोष्यन् ष्यमाणः कर्मणि स्ताविष्यमाणश्च। प्र—प्रस्तावे प्रस्तवीति प्रस्तुतः। प्रस्तावः।

स्तृ आवरणे स्वादि० उभ० सक० अनिट्।

कर्त्तरि स्तृणोति स्तृणुतः स्तृण्वन्ति स्तृणुवः स्तृण्वः स्तृणुते। स्तृणुयात् स्तृण्वीत। स्तृणोतु स्तृणुताम्। अस्तृणोत् अस्तृणुत। अस्तार्षीत् अस्तृत। तस्तार तस्तरतुः तस्तर्थ तस्तरिव तस्तरे। स्तर्त्तासि-से। स्तर्य्यात् स्तृषीष्ट। स्तरिष्यति ते। कर्म्मणि स्तर्य्यते। अस्तारि अस्तारिषाताम् अस्तृषाताम्। णिचि स्तारयति ते अतस्तरत्-त। यङि तास्तर्य्यते।

कृतसु स्तरणीयम्। स्तरणम्। स्तरः। विष्टरः आसने संस्तरः अवस्तरः। विस्तरः शब्दसमूहे अन्यत्र विस्तारः। स्तारकः। स्तारी। स्तर्त्ता। स्तृतः। स्तृतिः। स्तर्त्तव्यम्। स्तृत्वा। विस्तृत्य। स्तार्य्यम्। स्तृण्वन् स्तृण्वाणः स्तर्य्यमाणः। स्तरिष्य-न् ष्यमाणः कर्मणि स्तारिष्यमाणश्च। वि—विस्तारे विस्तृणाति विस्तरः। सम्-संस्तरे संस्तृणाति संस्तृतः।

स्था गतिनिरोधे भ्वा० अक० पर० अनिट्।

कर्त्तरि तिष्ठति। तिष्ठेत्। तिष्ठतु। अतिष्ठत्। अस्थात् व्यष्ठात्। तस्थौ नितष्ठौ। स्थाता। स्थेयात्। स्थास्यति। भावे। स्थीयते। अस्थायि। णिचि स्थापयति-ते निष्ठापयति। अतिष्ठिपत्-त। सनि तिष्ठासति यङि तेष्ठीयते।

कृत्सु स्थानीयम्। स्थानम्। स्थायः। स्थायी। स्थाता। स्थितः। स्थितिः। आस्था। स्थातव्यम्। स्थातुम्। स्थित्वा। स्थेयम्। तिष्ठन्। स्थास्यन्। क्वसु तस्थिवान् वितष्ठिवान्। क्नु स्थास्नुः। प्रतिज्ञायाम् निर्णयार्थावलम्बने स्वाभिप्रायप्रकाशने च आत्म० पृथिव्यां गन्धमातिष्ठते प्रतिजानाति। विवादे संशय्य तिष्ठते निर्णयार्थमवलम्बते। पत्ये तिष्ठते कामिनी पतिमुद्दिश्य स्वाभिप्रायं प्रकाशयति। सम् वि-अव-आत्म० संतिष्ठते वितिष्ठते अवतिष्ठते। प्र-प्रस्थाने आत्म० प्रतिष्ठते। प्रति-प्रतिष्ठायां प्रतितिष्ठति प्रतिष्ठितः। अधि-अधिष्ठाने अधितिष्ठति अधिष्ठितः। उद्-उत्थाने उत्तिष्ठति अनूर्द्ध्वचेष्टायान्तु आत्म० विद्यायामुत्तिष्ठते यतते इत्यर्थः।

स्ना शोधने अदा० पर० सक० अनिट्।

कर्त्तरि स्नाति अभिस्नाति। स्नायात्। स्नातु। अस्नात्। अस्नासीत्। सस्नौ सस्निथ-सस्नाथ।

स्नाता । स्नेयात्--स्नायात् । स्नास्यति । भावे स्नायते । अस्नायि । णिचि स्नापयति-ते वा घटादित्वे स्नपयति-ते । असिष्णपत् ।

कृत्सु स्नानीयम् । स्नानम् । स्नायः । स्नायकः । स्नायी । स्नाता । स्नातः अभिष्णातः निष्णातः । नदीष्णातः कुशले । स्नातिः । स्नातव्यम् । स्नातुम् । स्नात्वा । उपस्नाय । स्नेयम् । स्नान् स्नास्यन्

स्निह प्रीतौ दिवा॰ पर॰ अक॰ वेट् ।

कर्त्तरि । स्निह्यति परिस्निह्यति । स्निह्येत् । स्निह्यतु । अस्निह्यत् । अस्निहत् । सिष्णेह । स्नेहिता--स्नेढा । स्निह्यात् । स्नेहिष्यति--स्नेक्ष्यति । भावे स्निह्यते । अस्नेहि । णिचि स्नेहयति-ते असिष्णिहत्-त ।

कृत्सु स्नेहनीयम् । स्नेहनम् । स्नेहः । स्नेही । स्नेहिता--स्नेढा । स्नीढः । स्नेहितव्यम्--स्नेढव्यम् । स्नीढ्वा । संस्निह्य । स्नेह्यम् । स्निह्यन् । स्नेहिष्यन्--स्नेक्ष्यन् । उद् क्विप् नि॰ उष्णिक् ।

स्नु क्षरणे अदा॰ पर॰ अक॰ सेट् ।

कर्त्तरि स्नौति परिस्नौति स्नुतः स्नुवन्ति । स्नुयात् । स्नौतु । अस्नौत् । अस्नावीत् । सुष्णाव सुष्णविथ सुष्णुविव । स्नविता । स्नूयात् । स्नविष्यति । भावे स्नूयते । अस्नावि । णिचि स्नावयति-ते असुष्णवत्-त ।

कृत्सु स्नवनीयम् । स्नवनम् । स्नवः । स्नावकः । स्नावी । स्नविता । स्नुतः प्रस्नुतः । स्नुतिः ।
स्नवितव्यम् । स्नवितुम् । स्नुत्वा । अपस्नुत्य । स्नाव्यम् । स्नव्यम् । स्नुवन् । स्नविष्यन् ।

स्पन्द ईषत्कम्पे भ्वा० आत्म० अक० सेट् ।

कर्त्तरि स्पन्दते । अस्पन्दिष्ट । पस्पन्दे । भावे स्पन्द्यते अस्पन्दि । णिचि पर० स्पन्दयति । अपस्पन्दत् ।

कृत्सु स्पन्दनीयम् । स्पन्दनम् । स्पन्दः । स्पन्दकः । स्पन्दी । स्पन्दिता । स्पन्दितः । स्पन्दा ।
स्पन्दितव्यम् । स्पन्दितुम् । स्पन्दित्वा । निस्पन्द्य । स्पन्द्यम् । स्पन्दमानः स्पन्दिष्यमाणः ।
निस् निस्पन्दे । निस्पन्दते निस्पन्दः ।

स्पर्द्ध हर्षे भ्वा० आत्म० अक० सेट् ।

कर्त्तरि स्पर्द्धते । अस्पर्द्धिष्ट । पस्पर्द्धे । स्पर्द्धिष्यते । भावे स्पर्द्ध्यते । अस्पर्द्धि । णिचि स्पर्द्ध-
यति-ते अपस्पर्द्धत्-त ।

कृत्सु स्पर्द्धनीयम् । स्पर्द्धनम् । स्पर्द्धः । स्पर्द्धकः । स्पर्द्धी । स्पर्द्धिता । स्पर्द्धितः । स्पर्द्धा ।
स्पर्द्धितव्यम् । स्पर्द्धितुम् । स्पर्द्धित्वा । आस्पर्द्ध्य । स्पर्द्ध्यम् । स्पर्द्धमानः । स्पर्द्धिष्यमाणः ।
आ—आस्कन्दने आस्पर्द्धते । आस्पर्द्धा ।

स्पृश स्पर्शने तु॰ पर॰ सक॰ अनिट्।

कर्त्तरि स्पृशति। स्पृशेत्। स्पृशतु। अस्पृशत्। अस्प्राक्षीत्--अस्पार्क्षीत्-अस्पृक्षत्। पस्पर्श पस्पर्शिथ पस्पृशिव। स्प्रष्टा--स्पर्ष्टा। स्पृश्यात्। स्प्रक्ष्यति--स्पर्क्ष्यति। कर्म्मणि स्पृश्यते। अस्पर्शि। णिचि स्पर्शयति-ते अपस्पर्शत्-त अपस्पृशत् त। णिजन्तस्तु दानेऽर्थेऽपि।

कृत्सु स्पर्शनीयम्। स्पर्शनम्। णिचः स्पर्शनम् दानमित्यर्थः। स्पर्शः। स्पर्शकः। स्पर्शी। स्प्रष्टा-स्पर्ष्टा। स्पृष्टः। स्पृष्टिः। स्प्रष्टव्यम्-स्पर्ष्टव्यम्। स्प्रष्टुम्--स्पर्ष्टुम्। स्पृष्ट्वा। उपस्पृश्य। स्पर्श्यम्। स्पृशन् स्पृश्यमानः। स्प्र-क्ष्यन् क्ष्यमाणः स्पर्क्ष्य मान् णः। उप आचमने उपस्पृशति।

स्पृह इच्छायाम् अदन्त चुरा॰ उभ॰ सक॰ सेट्।

कर्त्तरि स्पृहयति-ते। अपस्पृहत्-त। कर्म्मणि स्पृह्यते। अस्पृहि।

कृत्सु स्पृहणीयम्। स्पृहणम्। स्पृहकः। स्पृहयिता। स्पृहितः। क्तिन् आस्ति अ स्पृहा। स्पृहयितव्यम्। स्पृहयितुम्। स्पृहयित्वा। उपस्पृह्य। स्पृह्यम्। स्पृहय-न् माणः स्पृह्यमाणः। स्पृहयि ष्यन् ष्यमाणः। कर्मणि स्पृहिष्यमाणस्तु।

स्फुट विदारणे प्रकाशे च तु॰ पर॰ अक॰ अनिट् कुटादि।

कर्त्तरि स्फुटति। अस्फुटीत्। पुस्फोट। भावे स्फुट्यते अस्फोटि। णिचि स्फोटयति-ते।

कृत्सु स्फुटनीयम् । स्फुटनम् । स्फोटः । स्फोटकः । स्फोटी । स्फुटिता । स्फुटितः स्फुट्टिः ।
स्फुटितव्यम् । स्फुटितुम् । स्फुटित्वा । संस्फुट्य । स्फुटन् स्फुटिष्यन् ।

स्फुर स्फुर्त्तौ तुदा० पर० अक० सेट् कुटादि ।

कर्त्तरि स्फुरति सर्वं स्फुटवत् । नि-वि वा षत्वम् निष्फुरति निस्फुरति विस्फु(ष्फु)रति इतिभेदः । एवं स्फुल

स्मि विस्मये भ्वा० आत्म० अक० अनिट् ।

कर्त्तरि स्मयते विस्मयते । अस्मेष्ट । विष्मिये । भावे स्मीयते । अस्मायि । णिचि स्माययति कर्त्तृतो
विस्मये आत्म० अच आत् पुक् च विस्मापयते ।

कृत्सु । स्मयनीयम् । स्मयनम् । स्मयः । स्मायकः । इनि स्मयी विस्मयी । स्मेता । स्मितः । स्मितिः ।
स्मेतव्यम् । स्मित्वा । विस्मित्य । स्मेयम् । स्मयमानः । स्मेष्यमाणः ।

स्मृ स्मरणे भ्वा० पर० सक० अनिट् घटादिर्वा ।

कर्त्तरि स्मरति । स्मरेत् । स्मरतु । अस्मरत् । अस्मार्षीत् । सस्मार सस्मरतुः सस्मर्थ सस्मरिव ।
स्मर्त्ता । स्मर्यात् । स्मरिष्यति । कर्मणि स्मर्यते । अस्मारि । णिचि स्मारयति-ते असस्म-
रत्-त । घटादिपक्षे स्मरयति इति भेदः ।

कृत्सु स्मरणीयम् । स्मरणम् । स्मरः । स्मारकः । स्मारी । स्मर्त्ता । स्मृतः । स्मृतिः । स्मर्त्त-

व्यम्। स्मर्त्तुम्। विस्मृत्य। स्मार्य्यम्। स्मरन्। स्मर्य्यमाणः। स्मरिष्यन् ष्यमाणः। कर्मणि स्मारिष्यमाणश्च। वि—विस्मरणे विस्मरति। विस्मृतिः विस्मरणम्।

स्यन्द चरणे भ्वा० आत्म० अक० वेट् इतादि लुङि लृटि लृङि च उभ०।

कर्त्तरि स्यन्दते निष्यन्दते--निस्यन्दते इतम्। एवं परि-निर्-वि-अभि-अनु वा षत्वम्। निस्यन्दते हस्ती। निस्यन्देते मत्स्योदके। अस्य-दत् अस्यन्दिष्ट--अस्यन्त। सस्यन्दे-सस्यदे। स्यन्दितासे--स्यन्तासे। स्यन्दिषीष्ट--स्यन्त्सीष्ट। सन्त्स्यति स्यन्दिष्यते। अस्यन्त्स्यत् अस्यन्दिष्यत। भावे स्यद्यते। अस्यन्दि। णिचि स्यन्दयति-ते। असिस्यन्दत्-त।

कृत्सु स्यन्दनीयम्। स्यन्दनम्। स्यन्दः। स्यन्दकः। स्यन्दी। निष्यन्दी। स्यन्दिता--स्यन्ता। स्यन्नः। स्यन्तिः। स्यन्दितव्यम्-स्यन्तव्यम्। स्यन्दितुम्-स्यन्तुम्। स्यन्त्वा। निष्यन्द्य। स्यन्द्यम्। स्यन्दमानः। स्यत्स्यन् स्यन्दिष्यमाणः।

स्रन्स ध्वंसे भ्वा० आत्म० अक० सेट्।

कर्त्तरि स्रंसते। लुङि उभ० अस्रसत् अस्रंसिष्ट। सस्रंसे--सस्रसे। स्रंसिषीष्ट। स्रंसिष्यते। भावे स्रस्यते। अस्रंसि। णिचि स्रंसयति-ते असस्रंसत्-त।

कृत्सु स्रंसनीयम्। स्रंसनम्। स्रंसः। स्रंसकः। स्रंसी। स्रंसिता। स्रस्तः। स्रस्तिः।

स्वंसितुम् । स्वंसितव्यम् । सुंसित्वा स्वस्त्वा । विस्वस्य । स्वंस्यम् । स्वंसमानः स्वंसिष्यमाणः ।

स्वन्ज आलिङ्गने भ्वादि० आत्म० सक० अनिट् ।

कर्त्तरि स्वजते विष्वजते अस्वङ्क्त न्यष्वङ्क्त--न्यस्वङ्क्त एवं वेः । सस्वजे--सस्वञ्जे विषस्वजे । स्वङ्क्तासे । स्वङ्क्षीच । स्वङ्क्ष्यते । कर्म्मणि स्वज्यते । अस्वञ्जि । णिचि स्वञ्जयति-ते असिष्वञ्जत् त ।

कृत्सु स्वञ्जनीयम् । स्वञ्जनम् । स्वङ्गः । निष्वङ्गः । स्वञ्जकः । घिणुन् परिष्वङ्गी । स्वङ्क्ता । स्वक्तः । स्वङ्क्तव्यम् । स्वङ्क्तुम् । स्वक्त्वा । परिष्वज्य । स्वजमानः । स्वज्यमानः । स्वङ्क्ष्यमाणः ।

स्वप शयने अदादि० पर० अक० अनिट् जक्षादिः रुदादिश्च ।

कर्त्तरि स्वपिति स्वपितः स्वपन्ति स्वपिषि स्वपिथः स्वपिथ स्वपिमि स्वपिवः । स्वप्यात् । स्वपितु स्वपिताम् स्वपन्तु स्वपिहि । अस्वपीत् अस्वपत् अस्वपिताम् अस्वपन् अस्वपीः अस्वपः । अस्वाप्सीत् । विसुष्वाप । सुषुपतुः । विसुष्वाप विषुषुपतुः सुष्वपिथ-सुष्वप्थ सुषुपिव । स्वप्ता । सुप्यात् । स्वप्स्यति । भावे सुप्यते । अस्वापि । णिचि स्वापयति-ते असिष्वपत्-त । सनि सुषुप्सति । णिचः सनि सुष्वापयिषति ते ।

कृत्सु स्वपनीयम् । स्वपनम् । स्वापः । स्वापकः । स्वापी । स्वप्ता । सुप्तः । सुषुप्तः । सुप्तिः । स्वप्तव्यम् । स्वप्तुम् । सुप्त्वा । विषुप्य स्वप्यम् । स्वपन् स्वप्स्यन् । न स्वप्नः नज् स्वप्नक् ।

हस हासे भ्वादि० पर० अक० सेट् ।

कर्त्तरि हसति । हसेत् । हसतु । अहसत् । अहसीत् । जहास । । भावे हस्यते । अहासि । णिचि हासयति-ते अजीहसत्-त ।

कृत्सु । हसनीयम् । हसनम् । हासः । हासकः । हसिता । हसितः । हसिः । हसितव्यम् । हसितुम् । हसित्वा । उपहस्य । हास्यम् । हसन् । हसिष्यन् । उप उपहासे (हास्यपूर्व्वकनिन्दने) सक० उपहसति उपहास्यः उपहसितः ।

हा त्यागे जुहो॰[3] पर० सक० अनिट् ।

कर्त्तरि जहाति जहीतः--जहितः जहति जहासि जहीथ--जहिथ जहामि जहीवः--जहिवः । जह्यात् । जहातु जहीताम्--जहिताम्--जहतु जहीहि--जहिहि--जहाहि । अजहात् । अहासीत् । जहौ जहतुः जहिथ--जहाथ । हाता । हीयात् । हास्यति । कर्मणि हीयते अहायि । णिचि हापयति-ते अजीहपत्-त ।

कृत्सु हानीयम् । हानम् प्रहाणम् । हायनो व्रीहिर्वर्षं च । हायः । हायकः । हायी । हाता । हीनः । हानिः । हातव्यम् । हातुम् । हित्वा । प्रहीय । हेयम् । जहत् हीयमानः । हा-स्यन् स्यमानः । कर्मणि हायिष्यमाणस्य ।

हन हिंसायां गतौ च अदा॰पर॰सक॰अनिट् । [अयं प्रमादादत्र पठितः हमः प्राक् ज्ञेयः ।
कर्त्तरि हन्ति प्रणिहन्ति हतः घ्नन्ति हंसि हथः हथ हन्मि प्रहण्वः—प्रहन्वः प्रहण्मः—प्रहन्मः ।
हन्यात् । हन्तु हताम् घ्नन्तु जहि । अहन् अहताम् अघ्नन् । अवधीत् अवधिष्टाम् अवधिषुः । जघान जघ्नतुः जघ्नुः जघनिथ-जघन्थ जघ्निव । हन्ता । वध्यात् । हनिष्यति । कर्मणि हन्यते । अवधि--अघानि अघानिषाताम्—अवधिषाताम् । जघ्ने । घानिता--अहसाताम्--हन्ता । वधिषीष्ट । घानिष्यते--हनिष्यते । णिचि घातयति-त अजीघतत्-त । सनि जिघांसति । यङि जेघ्नीयते जंघन्यते ।
कृत्सु हननीयम् । हननम् । बधः । घातः । उतमोपहः शोकापहः । क शत्रुघ्नः रोगघ्नः । घातकः । घाती । उकञ् घातुकः । हन्ता । हतः हतिः । हन्तव्यम् । हन्तुम् । हत्वा । प्रहत्य । घात्यम् । घ्नन् शतु निघ्नानः हन्यमानः । हनिष्यन् ष्यमाणः कर्मणि घानिष्यमाणश्च । क्विप् वृत्रहा । क्वतु जघ्निवान् जघन्वान् । परा पराहतौ पराहन्ति पराहतः पराहतिः । सम्—संघाते संहन्ति संहतः संघातः । वि—विघाते विहन्ति विहन्यते विहतः विघातः । उद्—उद्घाते उद्धन्ति उद्धतः उद्घातः । प्रति—प्रतिघाते प्रतिहन्ति प्रतिहन्यते प्रतिहतः प्रतिघातः । अभि—आ—आघाते अभिहन्ति अभिहतः अभिघातः

आहन्ति। आहतः आघातः। वि—आ—व्याघाते व्याहन्ति व्याहतः व्याघातः।

हा गतौ जुहो० आत्म० सक० अनिट्।

कर्त्तरि जिहीते जिहाते जिहते। जिहीषे जिहाथे जिहीध्वे जिहे। जिहीत। जिहीताम्।
अजिहीत। अहास्त। जहे। हातासे। हासीष्ट। हास्यते। कर्मणि हायते। अहायि।
णिचि हापयति-ते अजीहपत्-त।

कृत्सु हानम्। हानिः। हात्वा। प्रहाय। हेयम्। जिहानः हायमानः। हास्यमानः। कर्मणि
हायिष्यमाणश्च। इति भेदः अन्यत् पूर्व्ववत् उद्—उदये उज्जिहीते उज्जिहानः।

हि वर्द्धने गतौ स्वा० पर० सक० अनिट्।

कर्त्तरि हिनोति प्रहिणोति हिनुतः हिन्वन्ति हिनोषि हिन्वः हिनुवः। हिनुयात्। हिनोतु।
हिनु हिनवानि। अहिनोत्। अहैषीत्। जिघाय जिघ्यतुः जिघयिथ—जिघेथ। हेता।
हीयात्। हेष्यति। कर्मणि हीयते। अहायि। णिचि हाययति-ते अजीहयत्-त।

कृत्सु हयनीयम्। हयनम्। हयः। हायकः। हायी। हेता। हितः। हितिः। हेतुम्। हेतव्यम्।
हित्वा। संहित्य। हेयम्। हिन्वन् हीयमानः। हे-ष्यन् ष्यमाणः। कर्मणि हायिष्यमाणश्च।
प्र—प्रेरणे प्रहिणोति प्रहितः।

हिस हिंसने वा चुरा० उभय० पक्षे रुधा० पर० सक० सेट् इदित्।

कर्त्तरि हिंसयति-हिनस्ति हिंसयतः-हिंस्तः हिंसयते। हिंसयेत्-त हिंस्यात्। हिंसयतु तात्-हिनस्तु। हिंसय--न्ध हिंसान। अहिंसयत्-त अहिनः। अजिहिंसत्-त अहिंसीत्। हिंसयाम्-बभूव आस चकार जिहिंस। हिंसयितासि-से हिंसितासि। कर्म्मणि हिंस्यते अहिंसि। अहिंसिषाताम्। अहिंसयिषाताम्।

कृत्सु हिंसनीयम्। हिंसनम् हिंसः। हिंसकः। हिंसी। हिंसयिता हिंसिता। हिंसितः। हिंसना हिंसा। हिंसयितव्यम् हिंसितव्यम्। हिंसयितुम् हिंसितुम्। हिंसयित्वा हिंसित्वा। उपहिंस्य। हिंस्यम्। हिंसय-न्--मानः हिंसन् हिंस्यमानः। हिंसयि-ष्यन् ष्यमाणः हिंसिष्यन् ष्यमाणः।

हु होमे जु[3] पर० सक० अनिट्।

कर्त्तरि जुहोति जुहुतः जुह्वति जुहोषि जुहुथः जुहोमि जुहुव। जुहुयात्। जुहोतु जुहुतु जुहुधि जुहवानि। अजुहोत्। अहौषीत्। जुहाव जुहुवतुः जुहविथ--जुहोथ जुहुविव। पक्षे जुहवाम् बभूव--आस-चकार इत्यादि। होता। हूयात्। होष्यति। कर्मणि हूयते अहावि। णिचि हावयति ते अजूहवत्-त।

कृत्सु हवनीयम्। हवनम्। हवः। हावः। हावकः। हावी। अग्नि हविः। ध्रुग्ण होतम्। होता। हुतः। हुतिः। होतव्यम्। हुत्वा। प्रहुत्य। हव्यम् हाव्यम्। जुह्वत् हूयमानः। हो-ष्यन् ष्यमाणः कर्मणि हाविष्यमाणश्च।

ह्व हरणे भ्वा० उभय० द्विक० अनिट्।

कर्त्तरि हरति-ते। हरेत्-त। हरतु-ताम्। अहरत्-त। अहार्षीत् अहृत। जहार जह्रतुः जहर्थ जह्रिव जह्रे। हर्त्तासि-से। ह्रियात् हृषीष्ट। हरिष्यति-ते। कर्मणि ह्रियते। अहारि अहारिषाताम् अहृषाताम्। णिचि हारयति-ते अजीहरत्-त। सनि जिहीर्षति-ते।

कृत्सु हरणीयम्। हरणम्। हरः। प्रहारः। मनोहरः। हारकः। नाथहरिः। हारी। हर्त्ता। हृतः। हृतिः। हर्त्तव्यम्। हर्त्तुम्। हृत्वा। प्रहृत्य। हार्य्यम्। हर-न् मानः ह्रियमाणः। हरि-ष्यन् ष्यमाणः। कर्मणि हारिष्यमाणश्च। प्र-प्रहारे प्रहरति प्रहृतः प्रहरणम्। अप अपहृतौ (दूरीकरणे) अपहरति अपहृतः। सम् संहारे (नाशने) संहरति संहृतः संहारः। अनु—अनुकरणे अनुहरति अनुहरणम् गत्यनुकारे आत्म० अनुहरते। वि—विहारे। विहरति विहृतः विहारः। आ—आहारे आहरति आहृतः आहरणम्। उद् उद्धारे उद्धरति उद्धृतः उद्धारः। सम् अभि साहित्यकरणे। समभिहरति समभिहृतः

वि-आ-कथने व्याहरति व्याहारः व्याहृतिः। अभि अव भोजने अभ्यवहरति अभ्यवहारः। अभ्यवहृतः। निर्—निर्हरणे निर्हरति निर्हारः।

हृष तुष्टौ [4]दिवा॰ पर॰ अक॰ सेट्।

कर्त्तरि हृष्यति। हृष्येत्। हृष्यतु। अहृष्यत्। अहृषत् अहर्षीत्। जहर्ष जहृषतुः। हर्षिता। हृष्यात्। हर्षिष्यति। भावे हृष्यते। अहर्षि। णिचि हर्षय ति-ते। अजीहृषत्-त -अजहर्षत्-त। कृत्सु हर्षणीयम् हर्षणम्। हर्षः। हर्षकः। हर्षी। हर्षिता। हृषितः--हृष्टः। हृष्टिः। हर्षितव्यम् हृष्ट्वा। प्रहृष्य। हृष्यम्। हृष्यन् हर्षिष्यन्।

ह्नु चौर्य्ये [2]अदा॰ आत्म॰ सक॰ अनिट्।

कर्त्तरि ह्नुते ह्नुवाते ह्नुवते। ह्नुवीत। ह्नुताम्। अह्नुत। अह्नोष्ट। जुह्नुवे। ह्नोतासे। ह्नोषीष्ट ह्नोष्यते। कर्मणि ह्नूयते। अह्नावि अह्नाविषाताम् अह्नोषाताम्। णिचि ह्नावयति-ते अजुह्नवत्-त। कृत्सु ह्नवनीयम्। ह्नवनम्। ह्नवः। ह्नावकः। ह्नावी। ह्नोता। ह्नुतः। ह्नुतिः। ह्नोतव्यम्। ह्नुत्वा। प्रह्नुत्य। ह्नव्यम् ह्नाव्यम्। ह्नुवानः ह्नूयमानः। ह्नोष्यमाणः कर्मणि ह्नाविष्यमाणश्च। अप--अपलापे अपह्नुते अपह्नवः। नि-गोपने निह्नुते निह्नवः।

ह्री लज्जायां [3]जुहो॰ पर॰ अक॰ अनिट्।

कर्त्तरि जिह्रेति जिह्रीतः जिह्रियति जिह्रेषि जिह्रीथः जिह्रेमि। जिह्रीयात्। जिह्रेतु। अजिह्रेत्।

अह्रैषीत्। जिह्रियाम्बभूव आस-चकार-जिह्राय। आमभाव पक्षे जिह्रियतुः जिह्रयिथ जिह्रेथ। ह्रेतासि। ह्रीयात्। ह्रेष्यति। भावे ह्रीयते। अह्रायि। णिचि ह्रेपयति-ते अजिह्रिपत् त।
कृत्सु ह्रयणीयम्। ह्रयणम्। ह्रयः। ह्रायकः। ह्रायी। ह्रेता। ह्रीणः। ह्रीतिः। ह्रेतुम् ह्रीत्वा प्रह्रीय। ह्रेयम्। जिह्रियत् ह्रेष्यन्।

ह्वे स्पर्द्धायाम् भ्वा॰ उभ॰ सक॰ अनिट्। यजादि।

कर्त्तरि ह्वयति-ते। ह्वयेत्-त। ह्वयतु-ताम्। अह्वयत् त। अह्वत् अह्वत--अह्वास्त। जुहाव जुहुवतुः जुहविथ--जुहोथ जुहुवे। ह्वाता-सि-से। हूयात् ह्वासीष्ट। ह्वास्यति-ते। कर्मणि हूयते। अह्वायि अह्वायिषाताम् अह्वासाताम्। णिचि ह्वापयति ते अजूहवत् त।
कृत्सु ह्वानीयम्। ह्वानम्। ह्वायकः। ह्वायी। ह्वाता। हूतः। हूतिः। ह्वातुम्। हूत्वा। आहूय। ह्वेयम्। ह्वयन् मानः हूयमानः। ह्वास्यन् स्यमानः। कर्मणि ह्वायिष्यमाणश्च।
आ—आह्वाने आत्म॰ आह्वयते आह्वयमानः। आह्वानम् आहूतः। ओं तत् सत्।

इति श्री तारानाथ तर्कवाचस्पति भट्टाचार्य्य विरचितः अकारादिहान्तवर्णादिक प्रसिद्धधातुरूपादर्शः समाप्तः।